# अश्रुतर्पणम्



"इदानीं भवती आनन्दभवने उपविष्टा अस्ति । भवदीया माता तु मलक्काकारागारे । अहं तु अत्र नैनीकारागारे । परस्परदर्शनम् अपि नास्ति । दुःखकरं किल एतत् ? किन्तु तद्दिनं चिन्तयतु-यद्दिने वयं परस्परं मेलिष्यामः । अहं तादृशस्य दिनस्य प्रतीक्षायाम् अस्मि । एतद्विषयं चिन्तनं, मम हृदयम् उद्दीपयति ।"

(उत्तराणि ६६ तमे पृष्ठे)

# मित्रस्य आगमनम्

| | |
|---|---|
| गोपालः- हरिः ओम् रमेश । | Hellow, Ramesh. |
| प्रयाण कथम् आसीत् ? | How was the journey? |
| रमेशः- प्रयाण तु सुखकरम् आसीत् । | The journey was comfortable |
| गो- वस्तूनि एतावन्ति एव वा ? | Is this all the luggage you have? |
| र - आम् एकाकी किल अहम् ! | Yes, but don't you see I am alone ? |
| गो- त्रिचक्रिकया गच्छामः किल ? | Shall we take an auto? |
| र - त्रिचक्रिकया किमर्थम् ? नगरयानेन एव गच्छामः । | Why auto? Let us take a bus. |
| गो- मास्तु भोः, गृहप्राप्तिसमये विलम्बः भविष्यति । | No. We will be late. |
| भवान् तु श्रान्तः अस्ति... । | You are tired. |
| र - वृथा व्ययः किमर्थम् इति ? | I say, why spend money unnecessarily? |
| गो- तद्विषये चिन्ता मास्तु । मम प्रदेशं यदा आगतः तदा मया यथा उक्तं तथा श्रोतव्यं भवता । | That is not it. When you are on a visit to our place, so you had better listen to me. |
| र - अस्तु भोः, भवान् यथा वदति तथा । | All right, let it be so. |
| गो- कति दिनानि यावत् विरामः ? | How long are you on leave? |
| र - सर्वकारीयः विरामः दिनत्रयं यावत् अस्ति । एतदतिरिच्य मया दिनत्रयस्य विरामः स्वीकृतः । | We have three days of government holidays and I have in addition applied for three days leave. |
| गो- पञ्चदिनानि अपि अत्र एव भविष्यति किल भवान् ? | You will spend all the five days here. Won't you? |
| र - नैव भोः, इतः मैसूरु श्रीरङ्गपट्टनम् इत्यादिकं दृष्ट्वा मद्रास् अपि गन्तव्यम् । | No. I also have to visit Mysore, Srirangapatanam and a few other places. Then I should be going to Madras. |
| गो- किं भोः, भवान् सर्वदा एवं एव करोति ? | Why do you do like this always? |
| र - किं करोमि भोः, विरामाः न सन्ति । | What can I do? I cannont get a longer leave! |
| गो- मैसूरु द्रष्टुम् भवता सह अहम् अपि आगमिष्यामि । मद्रास्गमन व्याक्षिपतु । | I will go with you to Mysore. But please postpone your visit to Madras. |
| र - पश्यामः तावत् । | Well, let us see. |



# चन्दमामा

डिसेम्बर्– १९८४

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यम् रू. २-००

वार्षिकं ग्राहकशुल्कम् रू. २४-००

# चन्दमामा

संस्थापकः 'चक्रपाणिः' सञ्चालकः 'नागिरेड्डी'

संस्कृतं गृहेषु किमर्थम् आनेतव्यम्? महता प्रयत्नेन आनीतं चेदपि किं प्रयोजनम्?

अत्र हि एवं समाधानम्- तत्तत्प्रदेशे एका व्यावहारिकी भाषा भवति। तदतिरिच्य तत्र अन्याः अपि काश्चन भाषाः भवन्ति। व्यवहारिकभाषायाः तु सर्वत्र पोषणम् अस्ति। तदितरभाषाणां कथं पोषणम्? ताः भाषाः सहस्रशः वर्षेभ्यः तत्र जीवन्ति। एवं परिसरस्य आनुकूल्ये असत्यपि एताः कथं जीवन्ति, जीविष्यन्ति च? अत्र एकम् एव कारणं- ताः गृहेषु व्यवह्रियन्ते। सामाजिकप्रोत्साहे अविद्यमानेऽपि गृहेषु सन्तीति कारणेन परम्पराद्वारा ताः रक्षिताः सन्ति। माता स्वपुत्रान् पाठयति। पुत्राः स्वानन्तरीयान् पाठयन्ति।

एवम् एव संस्कृतम् अपि गृहेषु भाषितं भविष्यति चेत्? सामाजिकप्रोत्साहस्य अभावे अपि सा चिरं जीवति किल?

किं संस्कृतज्ञानाम् अस्माकं गृहम् अपि संस्कृतगृहं भवेत्? आत्मना आत्मा प्रष्टव्यः।

सम्पुटः- १ डिसेम्बर-८४ सञ्चिका-९

प्रतिकृतिमूल्यम् रू.२-०० * वार्षिकं ग्राहकशुल्कम् रू.२४-००






## चन्दमामा प्रजल्पति



### धूमवर्तिक्या अपायः

धूमवर्तिकासेवनेन क्यान्सर्‌रोगः जायते। एतत्कारणतः प्रपञ्चे प्रतिवर्षं ४६ लक्षजनाः मरणं प्राप्नुवन्ति। एतादृशमरणानि एशियाखण्डे एव अत्यधिकानि।

### भयङ्करः प्राणी



"जीविषु अतिभयङ्करः प्राणी मनुष्यः एव" इति वदति आस्ट्रेलियादेशस्यः सुप्रसिद्धः नाटकदर्शकः मैक् मुल्लिन्स्। अणुस्फोटनानि वायुप्रदूषणानि इत्यादयः प्रपञ्चस्य सर्वनाशं करिष्यन्ति इति तस्य अभिप्रायः। सः सिड्नीदेशे २२ दिनानि पञ्जरे स्थित्वा तत्र एकं फलकं स्थापितवान् आसीत्- "प्रपञ्चे सर्वापेक्षया भयङ्करः प्राणी" इति।



### सङ्गीतप्रवीणं कम्प्यूटरयन्त्रम्

पिलानिनगरे बिर्ला इन्स्टिट्यूट् ऑफ् टेक्नोलजी नामकसंस्थायां सङ्गीतशास्त्रप्रवीणम् कम्प्यूटरयन्त्रम् अस्ति। यदि वयं कश्चित् रागं सूचयामः तर्हि तत् यन्त्रम् तस्मिन् रागे गीतानां पट्टिकाम् एव प्रददाति।

## भवन्तःजानन्ति वा ?

१. रेड् क्रास् सोसैटी (१८६४) संस्थां कः संस्थापितवान् ?

२. सर्वप्रथमं कः अन्तरिक्षे पद्भ्यां सञ्चारं कृतवान् ?

३. दक्षिणध्रुवं कः सर्वप्रथमं गतवान् ?

४. संयुक्तराष्ट्रसङ्घस्य प्रथमः महासचिवः कः ?

५. प्रथमे विश्वधर्मसम्मेलने कः भारतीयः भाषणं कृतवान् इति भवन्तः जानन्ति वा?

(उत्तराणि ६४तमे पृष्ठे)



# वृद्धस्य चातुर्यम्

एकस्मिन् ग्रामे एकः वेङ्कटाचलः नाम धनिकः आसीत्। एकस्मिन् दिने, धनिकः यदा निद्रामग्नः आसीत् तदा कश्चित् चोरः तद्गृहं प्रविष्टवान्। सः शयनगृहं प्रविश्य आत्मना सह आनीतेन साधनविशेषेण पेटिकाम् उद्घाटितवान्। ततः धनकनकादीनि स्वीकृत्य पलायितवान् च। गमनसमये पादे लग्नेन केनचित् वस्तुना शब्दः उत्पन्नः। तेन वेङ्कटाचलः जागरितः।

तदा चोरः छुरिकां प्रदर्शयन् उक्तवान्- "कोलाहलं करोति चेत् मारयामि" इति।

भीतस्य वेङ्कटाचलस्य मुखतः कोऽपि शब्दः बहिः न आगतः। चोरः अपरस्मिन् क्षणे एव चोरितवस्तुभिः सह पलायितवान्। तदा वेङ्कटाचलः मञ्चतः अवतरन् उच्चस्वरेण "चोरः, चोरः" इति आक्रोशनं कृतवान्।

एतत् श्रुत्वा गृहसदस्याः सर्वे जागरिताः। पार्श्वगृहाणां जनाः अपि धावन्तः आगतवन्तः। "एतत् सर्वं सम्भवति" इति चोरः पूर्वम् एव जानाति स्म। अतः सः वेङ्कटाचलगृहस्य प्राकारम् उल्लङ्घ्य, किञ्चिद्दूरं मार्गे धावितवान्। पार्श्वे एकं द्वारम् अर्धम् उद्घाटितं दृष्टवान्। त्वरया तत् गृहं प्रविष्टवान् च।

चौर्यम् एव तस्य वृत्तिः किल ? अतः सः 'अस्मिन् गृहे अपि किमपि लभ्येत' इति चिन्तयन् सर्वत्र अन्विष्य शयनगृहं प्रविष्टवान्।

प्रकोष्ठे एकः दीपः मन्दं ज्वलन् आसीत्। मञ्चे एकः वृद्धः उपविष्टः आसीत्। सः वृद्धः द्वारम् एव पश्यन् आसीत्।

चोरस्य एकस्मिन् हस्ते चोरितवस्तूनि आसन्। अन्यहस्ते तीक्ष्णा छुरिका दृश्यते स्म। एवं स्थिते अपि वृद्धः द्वारम् एव पश्यन् तूष्णीम् उपविष्टः आसीत्।

चोरः इतोऽपि समीपं गतवान्। तदा वृद्धः



पृष्टवान्- "पुत्र ! इदानीम् आगतवान् वा ? किमर्थम् एतावान् विलम्बः ? कियन्तं कालम् अहं भवतः प्रतीक्षां करोमि ? कुत्र गतवान् एतावत्पर्यन्तम् ?" इति ।

'वृद्धः अन्धः' इति चोरः ज्ञातवान् । अतः सः छुरिकां वस्त्रेषु स्थापयन् उक्तवान्- "अयि भोः, अहं भवतः पुत्रः न । पुत्रस्य स्नेहितः । भवतः पुत्रेण एव अहं प्रेषितः ।"

"सः इदानीम् अपि न आगतवान् वा ? प्रायः पानशालायाम् एव पानमत्तः पतितः स्यात्" इति खेदेन उक्तवान् वृद्धः ।

"एतस्य वृद्धस्य कश्चित् पुत्रः वा पौत्रः वा प्रायः अस्ति । सः प्रतिदिनं पानशालां गच्छति इति भाति । पानमत्तः सः प्रतिदिनम् अपि विलम्बेन एव आगच्छति । एषः वृद्धः तु निद्रां विना तस्य आगमनं प्रतीक्षते" इति चोरः चिन्तितवान् ।

"भवतः पुत्रः मां उक्तवान्- 'अद्य रात्रौ अहं गृहं न गच्छामि । भवान् गत्वा मम पितरं सूचयतु' इति । अतः अहम् आगतवान् । जलं पीत्वा गच्छामि" इति उक्तवान् चोरः ।

"सः सर्वदा एवम् एव । इतःपरं तस्य, प्रतीक्षया प्रयोजनं नास्ति । अहम् तु शयनं करोमि" इति वदन् वृद्धः शयनार्थम् पादौ प्रसारितवान् ।

"इतः पलायनार्थम् एषः एव समयः" इति चोरः चिन्तितवान् । अतः सः वस्तूनि, छुरिकां च वृद्धस्य प्रकोष्ठे एकस्मिन् कोणे स्थापितवान् । तत्रैव स्थितं शुभ्रं युतकं वेष्टीं च धृतवान् । इदानीं सः चोरः इव न भाति, अपि तु सभ्यः इव ।

"किं कुर्वन् अस्ति ? जलं प्राप्तवान् वा?"

"जलं प्राप्तवान् पीतवान् च । इदानीं वस्त्रं सम्यक् धारयन् अस्मि । भवान् द्वारं पिधाय शयनं करोतु । अहं गच्छामि" इति उक्तवान् चोरः ।

"द्वारपिधानस्य आवश्यकता नास्ति भोः । पुत्रः उषःकाले वा आगच्छेत् । अहं निद्रां प्राप्नोमि चेत्, कोलाहले कृते अपि, मम जागरणं न भवति । अतः द्वारं तथैव अस्तु नाम" इति मञ्चे उपविश्य एव उक्तवान् वृद्धः ।

"द्वारं उद्घाटितम् एव भवति चेत् यः कश्चित् चोरः अन्तः प्रविशेत् किल ? एषु दिनेषु कालः दूषितः।"

"वृद्धस्य मम गृहं चोरः आगत्य किं वा कुर्यात् ? स्वीकृत्य गन्तुं तु किमपि नास्ति अत्र। अतः द्वारं तथैव अस्तु" इति वृद्धः उदासीनभावनया उक्तवान्।

वृद्धस्य जीवनपरिस्थितिं दृष्ट्वा चोरस्य मनसि खेदः उत्पन्नः। "एतस्य पुत्रः मिलितः चेत् सः बोधनीयः" इति सः मनसि एव चिन्तितवान्।



अनन्तरं सः निर्भयेन मार्गं प्रविष्टवान्। तदा चोरस्य अन्वेषणे मग्नाः केचन तत्र आगतवन्तः। ते चोरं दृष्ट्वा "एषः अस्मद्ग्रामीणः न। अन्यप्रदेशात् आगतः इव भाति" इति चिन्तयन्तः तस्य समीपम् आगतवन्तः।

"कः भोः ? भवान् मध्यरात्रे मार्गे सञ्चरति किल ?" इति एकः पृष्टवान्।

"अहं पार्श्वगृहस्य वृद्धस्य पुत्रस्य स्नेहितः। मम स्नेहितः एकां वार्तां प्रेषितवान् आसीत्। अतः अहम् अत्र आगतवान्" इति उक्तवान् चोरः।

"भवतः वचनस्य सत्यतां परिशील्यामः। अनन्तरम् एव भवान् इतः गच्छतु। वयम् इदानीम् एकस्य चोरस्य अन्वेषणे स्मः" इति एकः उक्तवान्। चोरः तु धैर्येण तैः सह वृद्धस्य गृहं गतवान्।

सर्वे वृद्धस्य गृहं गतवन्तः। तत्र चिन्तामग्नः वृद्धः मञ्चे उपविश्य द्वारप्रदेशम् एव पश्यन् आसीत्।

"किं भोः तात! एषः मार्गे गच्छन् आसीत्। भवतः पुत्रस्य स्नेहितः वा एषः ? कामपि वार्तां निवेदयितुम् आगतवान् इति वदति एषः। किम् एतत् सत्यम् ?" इति एकः ज्येष्ठः पृष्टवान्।

तदा वृद्धः उक्तवान्– "एषः असत्यं वदन् अस्ति। वस्तुतः एषः चोरः। चोरितवस्तूनि सः तत्र कोणे स्थापितवान्, पश्यन्तु" इति।

वृद्धस्य वचनानुसारं द्वित्राः प्रकोष्ठस्य कोणे गत्वा अन्वेषणं कृतवन्तः। तत्र सर्वाणि वस्तूनि

अपि लब्धानि । एतत् दृष्ट्वा चोरः ततः पलायनं कर्तुं प्रयत्नं कृतवान् । तदा सर्वे गत्वा चोरस्य बन्धनं कृतवन्तः ।

"कीदृशः वञ्चकः एषः वृद्धः ! एतम् अन्धं मन्यमानः अहं वञ्चितः । रे वृद्ध ! मां बन्धयितुम् इच्छन् एव भवान् द्वारम् उद्घाट्य स्थापितवान् किल ?" इति उक्तवान् चोरः ।

"मार्गे प्रचलन्तं कोलाहलं श्रुत्वा, किमिति द्रष्टुम् इच्छन् द्वारम् उद्घाटितवान् । 'मम पुत्रः आगतः स्यात् वा ?' इति मम सन्देहः आसीत् । 'भवान् चोरः' इति अनन्तरं ज्ञातम् । अहं दृष्टियुतः इति जानाति चेत् मां घातयति स्म किल भवान् ? अतः अन्धस्य अभिनयं कृतवान् ।" इति उक्तवान् वृद्धः ।

"एवं वा ? अस्तु नाम । रे, वृद्ध ! कदाचित् अहम् एतस्य प्रतीकारं साधयामि एव" इति कोपेन उक्तवान् चोरः ।

वृद्धः शान्तस्वरेण उक्तवान्- "पश्यतु, भवान् तु मारणार्थम् अपि सिद्धः चोरः । अतः यदा भवान् मम गृहं प्रविष्टवान् तदा एकाकी अहम् अन्धः इव आचरितवान् । यदा एते दश जनाः मम समीपम् आगताः तदा वृद्धस्य अपि मम शक्तिः आगता । चौर्यकारणतः सुदृढः अपि भवान् शक्तिहीनः सञ्जातः ।

एवं चौर्यं सुदृढं शक्तिहीनं करोति चेत् समाजः दुर्बलम् अपि शक्तिशालिनं करोति । अतः भवान् चौर्यकार्यं त्यक्त्वा समाजे विश्वासं स्थापयतु । तदा समाजस्थाः अपि भवतः हितम् एव कुर्वन्ति" इति ।

तदा उपस्थितेषु एकः उक्तवान् -" तात! भवतः वचनं सत्यम् । समाजः एव अस्माकं रक्षणं करोति । 'भवतः पुत्रः दुष्टः भवति चेत् अस्माकं का हानिः ?" इति चिन्तयन्तः- वयम् एतावत्पर्यन्तं तूष्णीं स्थितवन्तः । इतः- परं भवदीयं पुत्रं सन्मार्गे आनेतुं वयं सर्वे प्रयत्नं कुर्मः ।"

चोरस्य विचारणा प्रवृत्ता । चोरः कारागार- वासेन दण्डितः च ।






[ पद्मपादः पिङ्गलाय मरुभूमिचोरैः गुहासु बन्धितान् वणिजः प्रदर्शितवान्। हसनः सैनिकैः सह गत्वा वणिजः बन्धमुक्तान् कृतवान्। अनन्तरं पिङ्गलस्य अपेक्षानुसारं पद्मपादः वृकान् व्याघ्रान् च सृष्टवान्। तद्द्वारा मरुभूमिचोराः यथा स्वसमीपम् आगच्छेयुः तथा कृतवान्। ]

प्राणभीत्या कम्पमानान् समीपम् आगच्छतः मरुभूमिचोरान् दृष्ट्वा हसनः उच्चैः हसितवान्। मरुभूमौ बहुकालतः चौर्येण जनान् पीडयन्तः स्थिताः एते चोराः एवं अतीवसुलभतया वशे आगच्छेयुः इति कः जानाति स्म ? हसनस्य तु एतत् अनिरीक्षितम् आसीत्।

एतस्य सर्वस्य कारणं पद्मपादः एव। अतः कृतज्ञतां प्रकटयन् हसनः उक्तवान्– "पद्म-पाद ! भवतः सामर्थ्यम् अपूर्वम्। एतेषां दुष्टानां बन्धनार्थम् अस्माभिः बहुकालतः प्रयत्नः कृतः आसीत्। कष्टनष्टानि अनुभूतानि अपि। तथापि वयम् अस्मिन् कार्ये सफलतां न प्राप्तवन्तः। अद्य भवतः सहयोगात् एव एतत् सिद्धम्। इदानीं एषा मरुभूमिः यात्रिकाणां वणिजां च प्रवासार्थं योग्या जाता। भवतः दया अपारा। एतदर्थं वयं कृतज्ञाः" इति।

पद्मपादः हसन् उक्तवान्– "अहं तु यथाशक्ति साहाय्यं कृतवान्। मदीयं कर्तव्यं

कृतवान्। इतःपरं भवता एते चोराः राज्ञः वशे अर्पणीयाः, उचितं दण्डनीयाः च। इदानीम् अहं मया सृष्टान् व्याघ्रान् वृकान् च प्रस्थानयमि। यतः तेषां कार्यं इतःपरं किमपि नास्ति किल?" एवं वदन् सः हस्तद्वयम् उन्नीय किमपि मन्त्रम् पठितवान्। तदा व्याघ्राः वृकाः च अकस्मात् अदृश्यतां गताः। पद्मपादः स्वहस्तम् आगताः शिलाः प्रदर्शयन् उक्तवान्- "पश्यतु, एते एव व्याघ्राः वृकाः च आसन्" इति। अनन्तरं सः ताः शिलाः दूरं क्षिप्तवान्।

हसनस्य आदेशानुसारं सैनिकाः सर्वप्रथमं भैरवनाथस्य हस्तौ शृङ्खलया बद्धवन्तः। अनन्तरं तदीयानाम् अनुचराणां हस्ताः अपि तैः शृङ्खलया बन्धिताः।

एतन्मध्ये पद्मपादः पिङ्गलं किञ्चिद्दूरे नीत्वा पृष्टवान्- "पिङ्गल! भवान् शीघ्रम् एव अवन्तीनगरं गन्तुम् इच्छति किल?" इति। पिङ्गलः उक्तवान्- "आम्। मदीयौ अग्रजौ मां नाविकनायकाय विक्रीतवन्तौ। अतः तौ मातरम् अपि पीडितवन्तौ इति तु निश्चितम्। इतःपूर्वम् अपि एवम् एव बहुवारं जातम्। मातुः विषये तयोः प्रीतिः वा श्रद्धा वा नास्ति एव।"

"भवान् भल्लूककेतोः मन्त्रं विस्मृतवान् इति कृत्वा एतत् सर्वं प्रवृत्तम्। पश्यतु, इदानीं तं मन्त्रं अहम् पुनः स्मारयामि। इतःपरं कदाऽपि न विस्मर्तव्यम्। एतेन भवतः हितं सिध्यति"



इति उक्त्वा पद्मपादः पिङ्गलस्य कर्णे भल्लूक-केतोः मन्त्रम् उपदिष्टवान् । तथैव कनिष्ठि-कातः अङ्गुलीयकं निष्कास्य पिङ्गलस्य हस्ते समर्प्य उक्तवान्- "एतत् अङ्गुलीयकं सर्वदा जागरूकतया रक्षतु । मां द्रष्टुम् इच्छति चेत् मां स्मृत्वा अङ्गुलीयकं स्पृशतु । तदानीम् अहं प्रत्यक्षः भवामि ।"

"पद्मपाद ! भवतः सौजन्यम् अहं कदापि न विस्मरिष्यामि । भवतः साहाय्यतः एव अहं मातरं द्रष्टुं समर्थः भविष्यामि । भवान् अपि मया सह अवन्तीनगरम् आगच्छतु । भवन्तं दृष्ट्वा माता अतीव सन्तुष्टा भविष्यति" इति उक्तवान् पिङ्गलः ।

पद्मपादः पिङ्गलं वात्सल्यदृष्ट्या पश्यन् उक्तवान्– "पिङ्गल ! भवतः उपकारम् अपि अहं सर्वदा स्मरिष्यामि । भवतः साहाय्यं विना महामायं जेतुम् अहं न शक्नोमि स्म । भवतः गृहं पुनः कदाचित् आगमिष्यामि । भवतः मातुः दर्शनं करिष्यामि । इदानीं तु मम बहूनि कार्याणि सन्ति । तदर्थं मया शीघ्रम् एव प्रस्थातव्यम् । सर्वप्रथमं तु तीर्थयात्रा समाप-नीया । अस्तु, पुनः मिलावः" इति उक्त्वा पद्मपादः अदृश्यतां गतः ।

पिङ्गलः हसनस्य समीपं गत्वा "अहं मम जन्मभूमिं गन्तुम् इच्छामि" इति उक्तवान् । एतत् श्रुत्वा आश्चर्यं प्रकटयन् हसनः पृष्टवान्- "पिङ्गल! किं वदति भवान् ? अवन्तीनगर-गमनं पार्श्वग्रामगमनम् इव किं सुलभं वा ?





पठितवान्। तत्क्षणे एव भल्लूककेतुः प्रत्यक्षः भूत्वा नमस्कारं कुर्वन् उक्तवान्- "प्रभो ! किं करणीयम् इति आज्ञापयतु। बहुकालतः भवान् मां न स्मृतवान्। किं भवान् मां विस्मृतवान् ?"

भल्लूककेतोः भीकराकृतिं दृष्ट्वा हसनः भीतः। तस्य शरीरे कम्पः उत्पन्नः। चीत्कारं कुर्वन् सः ततः पलायितुं प्रवृत्तः। तदा पिङ्गलः तस्य हस्तं गृह्णन् मन्दहासपूर्वकम् उक्तवान्- "हसन ! भीतिः मास्तु। एषः भीकराकृतिः भल्लूककेतुः मम सेवकः।"

"किम ? एषः राक्षसः भवतः सेवकः वा !" इति अत्याश्चर्यं प्रकटयन् हसनः उक्तवान्।

अवन्तीनगरस्य एतत्प्रदेशस्य च मध्ये कियत् सुदूरम् अन्तरम् अस्ति इति भवान् जानाति किल ? सहस्रयोजनानां दूरं गन्तुं कोऽपि विना सिद्धतां प्रयत्नं करोति वा ? एतत्सर्वं भवता चिन्तितं किल ?"

पिङ्गलः हसन् उक्तवान्- "हसन ! भवान् मदीयां शक्तिं सामर्थ्यं च सम्यक् न जानाति। भवान् मया सह समीपे दृश्यमानायाः शिलायाः समीपम् आगच्छतु ! एकम् अद्भुतं पुरुषम् अहं प्रदर्शयामि। भवदीयाः सैनिकाः एनं दृष्ट्वा दिग्भ्रान्ताः भवेयुः। अतः किञ्चित् दूरं गच्छावः" इति। हसनं शिलायाः समीपं नीतवान् च।

पिङ्गलः मनसि एव भल्लूककेतोः मन्त्रं

"आम" इति वदन् पिङ्गलः भल्लूककेतोः स्कन्धम् आरुह्य उपविष्टवान्। हसनम् उक्तवान् च- "हसन ! अहम् इदानीं स्वदेशं गच्छन् अस्मि। बुभुक्षया पिपासया च म्रियमाणं मां भवान् रक्षितवान्। अतः अहं सर्वदा कृतज्ञः अस्मि। भवदीयम् उपकारम् अहं कदापि न विस्मरिष्यामि" इति। अनन्तरं भल्लूककेतुम् आज्ञापितवान्- "भल्लूककेतो ! माम् अवन्ती-नगरे मम गृहं प्रापयतु।"

भल्लूककेतुः उच्चैः हूङ्कारं कृत्वा आकाशमार्गे उड्डयनम् आरब्धवान्। समुद्रं, नदीः, पर्वतान्, अरण्यानि सर्वाणि उल्लङ्घ्य सूर्योदयसमये पिङ्गलम् अवन्तीनगरस्य तदीयगृहस्य पुरतः

अवतारितवान् ।

अतीव दुरवस्थाम् आपन्नं स्वकीयं गृहं दृष्ट्वा पिङ्गलः बहु खिन्नः । गृहस्य समीपे एव कृशा शक्तिहीना दुःखतप्ता च माता तेन दृष्टा । उद्गच्छत् दुःखं कथञ्चित् निगृह्य सः 'अम्ब !' इति वदन् मातरम् आलिङ्गितवान् । नेत्रतः अश्रूणि प्रवहन्ति स्म ।

माता एकवारम् आश्चर्यचकिता । अनन्तरम् आगतः प्रियपुत्रः पिङ्गलः एव इति ज्ञात्वा सन्तोषं प्रकटयन्ती सा उक्तवती- "पुत्र पिङ्गल ! भवान् इदानीम् अपि जीवति ? अहम् अतीव भाग्यशालिनी । जीवितस्य भवतः दर्शनं सर्वथा न शक्यम् इति मया चिन्तितम् आसीत्" एवं वदन्ती सा रोदनम् आरब्धवती ।




पिङ्गलः मातरं सान्त्वयन् उक्तवान्-"अम्ब! इतःपरं भीतेः प्रसक्तिः एव नास्ति । इदानीम् आगतः किल ? दुष्टौ तौ सहोदरौ कुत्र !" इति ।

"पुत्र! तौ सज्जनं भवन्तं यत् वञ्चितवन्तौ तस्य फलम् इदानीम् अनुभवतः । राजा उभयोः अपि बन्धनं कृत्वा कारागारे स्थापितवान् ।"

"तर्हि भवत्याः ईदृशी दुरवस्था किमर्थम् ? अहं तु भवत्याः समीपे धनं मन्त्रस्यूतं च दत्त्वा गतवान् किल ? तत्सर्वं सुरक्षितम् स्यादेव"

माता स्वकीयं दुःखं निगृह्णन्ती- "पुत्र ! भवान् तानि वस्तूनि मम सौकर्यार्थं दत्तवान्, सत्यम् । किन्तु तेषां वस्तूनां कारणतः एव मम एषा दुर्गतिः । भवतः सहोदरयोः कारगारप्राप्तिः अपि तस्मात् एव कारणात्" इत्येवं वदन्ती पिङ्गलस्य निर्गमनानन्तरं यत् यत् प्रवृत्तं तत्सर्वं निवेदितवती ।

मातुः वचनं श्रुत्वा कुपितः पिङ्गलः कम्पमानस्वरेण उक्तवान्- "अम्ब ! अवन्तीराजः एवं कृतवान् वा ? अस्तु, अहम् एतस्य प्रतीकारं साधयमि । मम परिवारं पीडयतः अवन्तीराजस्य कियत् धैर्यम् ! मम सहोदरौ अपि बन्धितवान् ! मम मन्त्रस्यूतम् अपि वशीकृतवान् किल ?" इति ।

अनन्तरं सः भल्लूककेतुं स्मृतवान् । भल्लूककेतुः प्रत्यक्षः भूत्वा पृष्टवान्

"प्रभो ! किं करणीयम् अस्ति ?" इति ।

"भल्लूककेतो ! अवन्तीनगरस्य राजा मदीयम् अग्रजद्वयं कारागारे स्थापितवान् । अतः तौ अग्रजौ शीघ्रम् अत्र आनयतु । तथैव राज्ञः कोषागारे स्थितम् ऐश्वर्यं सर्वम् अपि आनयतु । मन्त्रस्यूतः अपि तस्य एव समीपे अस्ति । तदपि अन्विष्य आनयतु" इति आदिष्टवान् पिङ्गलः ।

'यथा आज्ञापयति देवः' इति उक्त्वा भल्लूककेतुः अदृश्यतां गतः । स्वमायया राजभवनं प्रविश्य कोषागारे विद्यमानां समग्रसम्पत्तिं मन्त्रस्यूतं च स्वीकृत्य कारगारं प्रविष्टवान् ।

भल्लूककेतुं दृष्ट्वा जीवदत्तः लक्षदत्तः च मूर्च्छां गतवन्तौ । भल्लूककेतुः तौ स्कन्धस्य उपरि स्थापयित्वा पिङ्गलसमीपम् आगतवान् । "एषः मन्त्रस्यूतः । एतत् च महाराजस्य ऐश्वर्यम् । एतौ च भवदीयौ अग्रजौ" इति उक्त्वा अग्रजद्वयं भूमौ स्थापितवान्, ऐश्वर्यं मन्त्रस्यूतं च अर्पितवान् ।

मूर्च्छां गतौ पुत्रौ दृष्ट्वा मातुः हृदये दया उद्भूता । सा पुत्रयोः मुखस्य उपरि जलसेचनं कुर्वती उक्तवती- "रे जीवदत्त ! लक्षदत्त ! भवतोः एषा का दुर्गतिः ? भवतोः विषये अहं सर्वदा चिन्तयन्ती आसम् । इतःपरं चिन्ता नास्ति । भवतोः अनुजः पिङ्गलः आगतः अस्ति । सः सर्वं सुव्यवस्थितं करिष्यति" इति ।




तावति काले जीवदत्तः लक्षदत्तः च नेत्रम् उन्मीलितवन्तौ । पुरतः मातरं पिङ्गलं च दृष्ट्वा तयोः प्राणाः निर्गताः इव । तौ उक्तवन्तौ- "अम्ब ! पिङ्गल ! क्षम्यताम् । इदानीम् आवयोः विवेकः उदितः । अन्धकारमये कारागारे पूर्वकृतस्य पापस्य प्रायश्चित्तम् अनुभूतम्" इति ।

अग्रजयोः मुखतः आगतां दीनवाणीं श्रुत्वा पिङ्गलस्य मनः अपि खिन्नम् । तथापि कृतककोपं प्रकटयन् सः उक्तवान्- "भवतोः अपेक्षया अधिकः दुष्टः परमद्रोही विश्वासघातुकः च अन्यः न स्यात् एव । यदि अहम् इच्छामि, तर्हि भल्लूककेतुद्वारा भवन्तौ पातालं

प्रेषयितुं शक्नोमि। किन्तु 'भवन्तौ मम सहोदरौ' इति कृत्वा तथैव त्यजन् अस्मि'' इति।

''पिङ्गल! शान्तः भवतु। इदानीं विवेकः उदितः। कृतस्य पापस्य दण्डनम् अनुभूतम्। कृपया क्षाम्यतु भवान्'' इति एकस्वरेण उक्तवन्तौ जीवदत्तः लक्षदत्तः च।

अनन्तरं पिङ्गलः मन्त्रस्यूतं मातुः हस्ते अर्पयन् उक्तवान्- ''अम्ब! इतःपरम् एतं स्यूतं जागरूकतया संरक्षतु। अन्यः कोऽपि एतं न स्पृशेत्। इदानीं गच्छतु, शीघ्रम् एव भोजनं सज्जीकरोतु।''

भल्लूककेतुम् आहूय उक्तवान्- ''भल्लूककेतो! श्वः प्रातकालतः पूर्वम् तत्र दूरे दृश्यमाने वृक्षाणां समूहे एकं सुन्दरं भवनं निर्मापयतु। तच्च भवनं महाराजस्य भवनस्य अपेक्षया अपि भव्यं रमणीयं च भवेत्। केनाऽपि कारणेन तत् न्यूनं न स्यात्। ज्ञातं किल?'' इति।

''प्रभो! भवतः आज्ञां शिरसा वहामि। भल्लूकपर्वते निवसतां मदीयानां अनुचराणां मध्ये बहवः कुशलशिल्पिनः सन्ति। क्षणमात्रेण अहं तान् अत्र आनेतुं शक्नोमि। तान् सर्वान् आहूय इदानीम् एव कार्यस्य आरम्भं करोमि' इति उक्तवान् भल्लूककेतुः।

''रे रे, तिष्ठतु तावत्। दिने भवदीया राक्षसानुचाराः अत्र आगच्छन्ति चेत् महत् अनिष्टम् एव सम्भवेत्। भवतः गणः दृष्टः चेत् अवन्तीनगरस्य निवासी कोऽपि अत्र निवासं कर्तुं न इच्छति। भीत्या सर्वे इतः धावन्ति एव। एतत् अहं न इच्छामि। अतः दिने किमपि कार्यं न करोतु। रात्रौ एव कार्यं प्रचलतु'' इति पिङ्गलः उक्तवान्।

''अस्तु, भवान् यथा इच्छति तथा एव भवतु। अहम् इदानीं भल्लूकपर्वतं गत्वा अनुचरान् सूचयामि। सन्ध्यासमये आगत्य ते कार्यस्य आरम्भं करिष्यन्ति'' इति उक्त्वा भल्लूककेतुः अदृश्यतां गतः।

(आगामिसञ्चिकायां समाप्ता भविष्यति)





# यन्त्राङ्गुलीयकम्

वेतालस्य अन्यथा गतिः न आसीत्। अन्यत्र कुत्रापि गन्तुम् अशक्तः सः तम् एव शवं प्रविश्य, तस्य एव वृक्षस्य ताम् एव शाखाम् अवलम्ब्य लम्बमानः, त्रिविक्रमं निरीक्षमाणः आसीत्। तथैव राजा त्रिविक्रमः पुनः आगत्य, वृक्षम् आरुह्य, शवं गृहीत्वा स्कन्धे आरोप्य मौनमुद्रया श्मशानं प्रति गन्तुं प्रवृत्तः। तदा शवान्तर्गतः वेतालः "साधु! साधु! महाराज! भवतः एतावतः साहसस्य श्रमस्य च किं वा प्रयोजनं, तच्च कदा वा लभ्येत इति अहं न जानामि। किन्तु एकं विशेषविषयं वदामि। सः विषयः भवतः अपि मार्गदर्शकः भवेत्। केचन महता क्लेशेन कार्यं साधयन्ति। किन्तु अन्ते लब्धं फलं अगृहीत्वा तथैव परित्यजन्ति। अस्य उदाहरणरूपेण एकां कथां वदामि। कथायाः श्रवणेन भवतः श्रमः न्यूनः भवेत्" इति उक्त्वा कथां आरब्धवान्।

सुमन्त्रः बाल्ये एव मातापितृविहीनः

# वेतालकथा



जातः। अतः तत्र तत्र अटन्तं तं बालम् अनाथं दृष्ट्वा, एकः मुनिः दयया स्वीयम् आश्रमम् नीतवान्। तत्र गुरुकुले सुमन्त्रः श्रद्धया गुरुसेवां कुर्वन् विद्याभ्यासं कृतवान्। सः गुरोः प्रियशिष्यः जातः।

अनन्तरं सुमन्त्रस्य हस्ते एकं योग्यतापत्रं दत्त्वा मुनिः- "वयस्य ! भवतः विद्याभ्यासः समाप्तः। भवान् इदानीं समीपे वा दूरे वा अपेक्षितं राज्यं गच्छतु। यः कोऽपि राजा स्वकीये आस्थाने भवते उद्योगं दास्यति" इति उक्त्वा आशीर्वचनपुरस्सरं तं प्रेषितवान्।

सुमन्त्रः रोहितपुरं प्रस्थितवान्। रोहितपुरस्य महाराजस्य दर्शनं एव तस्य लक्ष्यम् आसीत्। किन्तु किञ्चिद्दूरं गत्वा अनन्तरं भ्रान्त्या रोहितपुरमार्गं त्यक्त्वा अन्यं मार्गं गृहीतवान्। सायङ्कालः जातः। सूर्यः अस्तं गतः। तदा सः अरण्यमध्ये आसीत्।

इदानीं रात्रिः कुत्र यापनीया इति समस्या प्राप्ता। तदर्थं सः परितः अन्विष्यन् समीपे एव एकम् अल्पं शैलं दृष्टवान्। शैलस्य उपरि एकं शिथिलगृहम् अपि दृष्टम्। कथञ्चित् शैलम् आरुह्य तत् गृहम् गन्तव्यम् इति निश्चित्य सुमन्त्रः तं शैलं प्रस्थितः।

शैलस्य उपत्यकायां कश्चित् युवकः तूष्णीं स्थितवान् आसीत्। तस्य वस्त्रभूषणानि बहुमूल्यकानि आसन्। तेन सः यस्यकस्यचित् देशस्य युवराजः इव दृश्यते स्म। तं दृष्ट्वा सुमन्त्रः यद्यपि प्रथमम् आश्चर्यचकितः जातः। तथापि रात्रौ सहनिवासार्थम् एकः लब्धः इति सन्तोषं प्राप्य सः स्मयमानः तस्य समीपं गत्वा नमस्कारं कृतवान्।

सः युवकः प्रतिनमस्कारं न कृतवान्। प्रत्युत गम्भीरमुखभावेन "किं भवान् अपि भाग्यस्य परीक्षां कर्तुम् आगतवान् वा ? किन्तु आवयोः मध्ये केन सः अवकाशः लभ्येत इति ज्ञातुम् इदानीं खड्गयुद्धम् एव अवशिष्टः मार्गः। अतः भवतः समीपे खड्गः अथवा अन्यत् यत् अस्ति तत् गृहीत्वा सिद्धः भवतु" इति उक्त्वा सहसा कोशतः खड्गम् आकृष्य सुमन्त्रस्य उपरि आक्रमणं कृतवान्।

सुमन्त्रः आश्चर्येण "किम् उक्तं भवता ?

आवयोः मध्ये खड्गयुद्धं वा? वस्तुतः मम समीपे खड्गादिकं किमपि नास्ति एव। वैरं तु सुतरां नास्ति'' इति उक्तवान्।

''एवं तर्हि भवान् अस्याः अमावास्यायाः मध्यरात्रपर्यन्तम् अत्रैव स्थित्वा निरीक्षणं करोतु। अद्य कालरात्रौ मम भाग्यं कीदृशम् इति निश्चयेन ज्ञातुं शक्नोमि अहम्'' इति सः युवकः अवदत्।

तस्य वचनैः सुमन्त्रस्य आश्चर्यम् अधिकतरं जातम्। सः युवकम्-''आर्य! अहं पुनः एकवारं वदामि। भवतः वचनानाम् अभिप्रायः मया न ज्ञातः। भवतः भाग्यपरीक्षाकाले अहं विघ्नभूतः इति भवान् भावयति वा? न हि, न हि। अहं केवलम् एकः यात्रिकः। अन्यत्र गच्छन् प्रमादात् एतत् अरण्यम् आगतवान्। तत्र शैलस्य उपरि गृहं दृष्ट्वा रात्रिं तत्र यापयितुं गच्छन् अस्मि। तावदेव'' इति उक्तवान्।

एतत् वचनं श्रुत्वा युवकः शान्तः जातः। अनन्तरं सः आत्मनः आगमनकारणं सप्रपञ्चं निवेदितवान्।

सः युवकः रोहितपुरस्य युवराजः। एतस्य शैलस्य उपरि वर्तमाने शिथिलगृहे भूतप्रेतादयः वसन्ति। गतपञ्चाशत्वर्षेभ्यः आरभ्य अनेके जनाः एतत् शिथिलगृहं प्रविष्टवन्तः। किन्तु तेषु एकः अपि जीवन् न प्रतिनिवृत्तः। तस्मिन् गृहे एकः हंसतूलिकातल्पः अस्ति।



तस्य उपरि स्थितस्य उपधानस्य अधः एकं मन्त्राङ्गुलीयकम् अस्ति। यः अमावास्यायाः अन्धकारे तत्गृहं प्रविश्य तत्र एव स्थित्वा रात्रिं यापयति, सः तत् अङ्गुलीयकं प्राप्तुम् अर्हति। तस्य अङ्गुलीयकस्य महत्वम् एवम् अस्ति, यत् यः तत् अङ्गुल्यां धारयति, सः शतायुः भविष्यति।

अद्य अमावास्या। अतः युवराजः तस्मिन् शिथिलगृहे रात्रिं यापयितुं प्रयत्नं करोति।

''यः तत् मन्त्राङ्गुलीयकं प्राप्तुम् इच्छति, तेन एकाकिना शैलम् आरुह्य भूतप्रेतादिसहितं तत् गृहं गन्तव्यम्। तत्र तल्पे उपविश्य प्रातःपर्यन्तं स्थातव्यम्। मम सौभाग्येन एव भवान् अकस्मात् अत्र आगतवान् इति

प्रतिभाति। भवान् अत्रैव मम प्रतीक्षां करोतु। तेन अहमपि सधैर्यं गच्छामि। मम आगमन-पर्यन्तम् अत्रैव स्थास्यति खलु?" इति पृष्टवान् युवराजः।

तथा अस्तु इति सुमन्त्रः अङ्गीकृत्य,तत्र कस्याश्चित् शिलायाः उपरि उपविशन् "भवत्कृते प्रातःपर्यन्तम् अत्रैव उपविशामि। भवतः विजयः भवतु इति मनःपूर्वकं प्रार्थनां करिष्यामि" इति उक्तवान्।

सूर्यः अस्तं गतः। अल्पे एव काले अरण्यभागः अन्धकारेण व्याप्तः। युवराजः शैलम् आरोढुम् आरब्धवान्। सुमन्त्रः शिलायाः उपरि तूष्णीं उपविश्य, अमावास्यायाः अन्धकारे पक्षिणां मृगाणां च विविधान् कण्ठस्वरान् शृण्वन् कालं यापयति स्म। किञ्चित्कालानन्तरं पादध्वनिः श्रुतः। युवराजः शैलतः अवतरति स्म।

समीपम् आगतं युवराजं दृष्ट्वा सुमन्त्रः "किं जातम्? किमर्थम् एतावत्शीघ्रम् अधः आगतवान्" इति पृष्टवान्। युवराजः अधोमुखः कम्पमानेन स्वरेण "शैलस्य आरोहण-समये अवर्णनीया महती भीतिः सञ्जाता। अतः प्रत्यागतवान्" इति उक्तवान्।

"युवराज! भयं किमर्थम्? मनसि ईश्वरस्य ध्यानं कुर्वन् धैर्येण उपरि गच्छतु। भूतप्रेत-पिशाचादयः विना कारणं स्वयं कमपि न पीडयन्ति" इति उक्तवान् सुमन्त्रः।

युवराजः पुनः एकवारं शैलम् आरोढुम्



उद्युक्तः। सः किञ्चिदेव दूरं गतवान्। तदा शिथिलगृहस्य पृष्ठभागतः उच्चैः उत्पन्नानि शृगालानां कर्कशरुतानि श्रुतवान्। तस्मिन् एव समये अग्निकणसदृशाः असङ्ख्याकाः खद्योताः शिथिलगृहं परितः डयमानाः दृष्टाः। शृगालस्वरेण एव भीतस्य युवराजस्य, एतेषां दर्शनेन अग्निज्वालाभिः शिथिलगृहं व्याप्तम् अस्ति इति भ्रमः अभवत्। तस्य पादौ तत्रैव स्थगितौ।

एवं रीत्या भीतः युवराजः पुनः अधः अवतीर्य सुमन्त्रस्य समीपम् अगत्य "भोः मित्र! भूतप्रेतादिभिः व्याप्ते तस्मिन् जीर्णभवने सम्पूर्णां रात्रिं यापयितुम् अहम् असमर्थः। नितरां पराजितः अस्मि" इति निराशया उक्तवान्।

सुमन्त्रः किञ्चित्कालं पर्यालोच्य "निराशा मास्तु, युवराज! यदि भवान् आज्ञां ददाति, तर्हि अहम् अपि एकवारं प्रयत्नं करोमि" इति उक्तवान्।

"तदर्थं भवान् स्वतन्त्रः। भवन्तं निवारयितुम् अहं कः?" इति शान्तस्वरेण युवराजः अवदत्।

तदा सुमन्त्रः शैलम् आरुह्य शिथिलगृहं प्राप्तवान्। मार्गमध्ये भयङ्करशब्दान् अपि अशृण्वन् इव, किमपि अपश्यन् इव धैर्येण गतवान्। द्वाराणि उद्घाटितानि एव आसन्। अन्तः गाढान्धकारः आसीत्। यदा सः अन्तः प्रविष्टवान्, तदा हृदयभेदकैः आक्रोशनशब्दैः अट्टहासध्वनिभिः च तत् गृहमेव कम्पितम् इव।





एतत्सर्वं सुमन्त्रेण निरीक्षितम् एव आसीत्। अतः सः निर्भयः सन् तल्पस्य समीपं गत्वा तस्य उपरि उपविष्टवान्। "किं रे! शतं वर्षाणि जीवितुम् इच्छा वा? भवतः एषा दुराशा एव अद्य भवतः मरणस्य कारणं भविष्यति" इति भीकरः कण्ठस्वरःश्रुतः।

"मम तु दीर्घायुषः अपेक्षा नास्ति एव। मदर्थम् अपि अहम् अत्र न आगतवान्। किन्तु अस्यां रात्रौ एव मम मरणं भविष्यति इति विधिलिखितम् अस्ति चेत्, तत् निवारयितुम् इच्छा नास्ति। न शक्यते अपि" इति धीर-स्वरेण सुमन्त्रः उक्तवान्।

अनन्तरं तत् भूतगृहं बहुसमयपर्यन्तं शब्द-रहितम् आसीत्। अनन्तरं पुनरपि अट्टहास-ध्वनिः श्रुतः। हासानन्तरं रोमाञ्चजनकः कश्चित् क्रूरकण्ठः "किं रे? भूतप्रेतादिविषये भवतः भयम् एव नास्ति वा? "भयेन प्रलपन् भवान् भूमौ इतस्ततः लुठन् मरिष्यति। तत् वयं द्रक्ष्यामः" इति अस्माकम् इच्छा आसीत्। भवान् तु पाञ्चालिकावत् उपविष्टवान्। किमिदं चित्रम्?" इति श्रुतः।

"जीवतः मनुष्यस्य मृतानां भूतप्रेतानां विषये भयं किमर्थम्?" इति पृष्टवान् सुमन्त्रः।

अनन्तरं पुनः तल्पः इतस्ततः कम्पितुम आरब्धः। द्वारतः अत्युष्णवायुः अन्तः प्रविष्टः। तस्य वायोः तीक्ष्णध्वनिः कर्णौ छिद्रयति इव। अनेके जतुकाः सुमन्त्रस्य मस्तकस्य समीपे एव डयमानाः आसन्। एतेषां कोलाहलानां मध्ये अपि अचलः सुमन्त्रः स्वस्थम् उपविष्टः! तस्य शरीरस्य कापि हानिः न अभवत्।

क्रमेण रात्रिः अतीता। प्रकाशः सर्वत्र व्याप्तः। भूतगृहे सर्वाः विकृतचेष्टाः समाप्ताः। तल्पे उपविष्टः सुमन्त्रः उपधानस्य अधः स्थितं अङ्गुलीयकं गृहीतवान्।

अनन्तरं सः शैलम् अवतीर्य आगतवान्। युवराजः तदा शिलायाः उपरि निद्राति स्म। तस्य पार्श्वे स्थितं खड्गम् एव पश्यन् सुमन्त्रः तत्रैव किञ्चित्कालं स्थितवान्। अनन्तरं तम् प्रबोधयितुं इच्छन् आहूतवान्। पार्श्वे स्थितस्य वृक्षस्य शाखाः कम्पयित्वा शब्दान् उत्पादितवान्। तथापि युवराजः जागृतिं न

प्राप्तवान् ।

सुमन्त्रः पार्श्वे अन्यस्याः शिलायाः उपरि उपविष्टवान् । तदा शैलस्य उपरिभागतः भयङ्करः शब्दः श्रुतः । तेन शब्देन युवराजस्य जागृतिः जाता । सः सुमन्त्रः च आश्चर्येण शैलं दृष्टवन्तौ । सम्पूर्णं शिथिलगृहं छिद्रीभूय युगपत् एव पार्श्वे पतितम् । सर्वे पिशाचाः आक्रोशं कुर्वन्तः आकाशं प्रति धावितवन्तः ।

सुमन्त्रः शिथिलगृहतः आनीतं मन्त्राङ्गुलीयकं युवराजस्य हस्ते दत्त्वा "गृह्णातु ! इदमेव हि मन्त्राङ्गुलीयकम् । भूतगृहे लब्धम् । सन्तोषेण धारयतु" इति उक्तवान् ।

"मित्र, अहम् अतीव भ्रान्तः अस्मि । भवान् तु निश्चयेन एव जीवन् आगतवान् । एतदर्थं भवते किं बहुमानं ददामि ?" इति पृष्ट्वा युवराजः पुनः "मम कण्ठे वर्तमानस्य एतस्य रत्नहारस्य मूल्यं दशसहस्रं सुवर्णदीनाराः । भवान् इच्छति चेत्, इदानीम् एव भवते ददामि" इति उक्तवान् ।

सुमन्त्रः अत्यन्तविनयेन "अहं पण्डितः अस्मि । अध्यापनं, ज्ञानलाभार्थम् अध्ययनम्, ग्रन्थानां रचना च मम कार्याणि । एतैः एव मम आनन्दः भवति । ऐश्वर्यस्य अपेक्षा नास्ति" इति उक्तवान् ।

"एवं तर्हि भवतः ऋणस्य प्रत्यर्पणं कथं करणीयम्" इति युवराजः पृष्टवान् ।

"एतं रत्नहारं मत्परतया भवान् एव विक्रीय,



तेन लब्धस्य धनस्य दरिद्राणां कृते व्याधिग्रस्तानां कृते च विनियोगं करोतु । इदानीम् अहम् इतः गच्छामि" इति सुमन्त्रः गन्तुम् उद्युक्तः ।

तस्य वचनं श्रुत्वा युवराजः अत्याश्चर्येण "कुत्र प्रस्थितः ?" इति पुनः पृष्टवान् ।

"कुत्र गन्तव्यम् इति निर्णयः न कृतः । विष्णुपुरं वा शमन्तपुरं वा गमिष्यामि" इति उक्त्वा सुमन्त्रः पुनः क्षणमपि तत्र न स्थित्वा ततः शीघ्रं निर्गतवान् ।

इत्थं वेतालः कथां समाप्य, "महाराज, भूतप्रेतानाम् आश्रयस्थानं तत् शिथिलगृहं प्रविष्टः सुमन्त्रः अपूर्वं महत्वपूर्णं च अङ्गुलीयकं

किमर्थम् युवराजाय दत्तवान् ? प्रथमं तस्य गम्यस्थानं रोहितपुरम् आसीत्। किन्तु रोहितपुरस्य युवराजेन सह स्नेहानन्तरम् अपि सः रोहितपुरं न गतवान्। प्रत्युत अपरिचितम् अन्यं प्रदेशं गन्तुं किमर्थं निश्चितवान् ? एतेषां सन्देहानाम् उचितम् उत्तरं जानन् अपि न वदति चेत्, भवतः शिरः सहस्रधा भग्नं भवति !" इति उक्त्वा तूष्णीम् अभवत्।

तदा त्रिविक्रमः एवं रीत्या उत्तरं दत्तवान्- "सुमन्त्रः पण्डितः। अतः भूतप्रेतानाम् उत्पत्तिः कथं भवति इति सः जानाति स्म। ततः पूर्वं ये ये भूतगृहं प्रविष्टवन्तः ते सर्वे भीत्या एव मृताः। अनन्तरं ते एव भूतरूपेण परिणताः इति सः सम्यक् जानाति स्म। किञ्च सुमन्त्रः तत् मन्त्राङ्गुलीयकं स्वसमीपे न स्थापितवान्। यतः युवराजः मन्त्राङ्गुलीयकार्थम् एव आग्रहपूर्वकम् आगतवान् आसीत्। सुमन्त्रः यदि तस्मै न ददाति, तर्हि सः सुमन्त्रं हन्तुम् अपि सिद्धः भवेत्। शैलतः यदा सुमन्त्रः अधः अवतीर्णः, तदा युवराजः निद्रावशः आसीत्। सुमन्त्रः खड्गेन तं सुलभतया हन्तुं शक्नोति स्म। किन्तु सुमन्त्रः विवेकी आसीत्।

तेन युवराजेन सह सुमन्त्रः रोहितपुरं न गतवान्। तस्य अपि महत् कारणम् अस्ति। 'युवराजः स्वयं साहसेन मन्त्राङ्गुलीयकं साधितवान्' इति लोके कीर्तिं प्राप्तुं युवराजः इच्छति स्म। यदि सुमन्त्रः रोहितपुरं गच्छति, तर्हि सः यदाकदाचित् रहस्यं बहिः वदेत् इति युवराजस्य भीतिः आसीत् एव। अतः युवराजः राजास्थानं आगन्तुम् आह्वानम् अदत्त्वा तत्र एव स्वीयं कण्ठहारं बहुमानरूपेण दातुम् उद्युक्तः। तस्य एषः एव अर्थः यत् भवान् इतः परं अस्माकं राज्ये न तिष्ठतु इत्येव। अतः एव सुमन्त्रः रोहितपुरस्य मार्गं त्यक्त्वा अन्यं मार्गम् अनुसृतवान्" इति।

एवं रीत्या यदा त्रिक्रमस्य मौनभङ्गः अभवत्, तदा वेतालः शवसहितः उड्डीय गत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।





# शापोऽपि वस्तुत्वः

पुरा धर्माङ्गणनगरे सीतारामः इति कश्चित् वणिक् आसीत् । सः फलवाटिकासु गत्वा विविधफलानि क्रीत्वा नगरस्य मार्गे मार्गे प्रातःकालतः सायं पर्यन्तं सञ्चरन् तेषां विक्रयणं करोति स्म । तदा तदा फलविक्रयणार्थं नगरं परितः स्थितान् ग्रामान् अपि गच्छति स्म । एवंरीत्या सः जीवननिर्वहणं करोति स्म ।

एकदा सीतारामः फलानि गृहीत्वा रामपुरं गतवान् । तद्दिने तत्र साप्ताहिकं वाणिज्यम् आसीत् । महान् जनसम्मर्दः आसीत् । अतः सर्वाणि फलानि सलीलं विक्रीतानि । सायङ्काले सीतारामः रिक्तं फलकण्डोलं मस्तके स्थापयित्वा गृहं प्रति प्रस्थितवान् ।

रामपुरतः धर्माङ्गणपर्यन्तं एकम् अरण्यम् आसीत् । सर्वत्र सान्द्रः अन्धकारः जातः । तदा मस्तके स्थितः रिक्तकण्डोलः सहसा गुरुभूतः जातः । अये ! किमिदं जातम् !

एतत् विचित्रं दृष्ट्वा भीत्या सः किञ्चित् कम्पितः । किन्तु उत्तरक्षणे धैर्यम् अवलम्ब्य कण्डोलं मस्तकतः अवतार्य भूमौ स्थापितवान् । कण्डोलः रिक्तः एव आसीत् ।

"अहो ! प्रायः अहमेव भ्रान्तः !" इति चिन्तयन् सीतारामः पुनः कण्डोलं मस्तके स्थापयित्वा अग्रे प्रस्थितः ।

तदा कण्डोलः पुनः पूर्ववत् भारभूतः जातः। "का इयं माया ! नूनं कस्यचित् पिशाचस्य उपद्रवः एषः" इति चिन्तयन् सीतारामः भयग्रस्तः अभवत् । "वत्स सीताराम ! किं भीतः ! ?" इति एकः सुमधुरः कण्ठस्वरः श्रुतः ।

तत् वचनं श्रुत्वा सीतारामः धैर्यं प्राप्य "कुतः भीतिः ? मया कः अपराधः कृतः ? भयं किमपि नास्ति । कः भवान् ? कस्मात् स्थानात् वदति ? मम कण्डोलस्य भारस्य



भवान् एव कारणं वा ?'' इति पृष्टवान् ।

''भवतः संशयः यथार्थः एव । किन्तु न अहं पिशाचो वा भूतो वा । अहं वनदेवता अस्मि । मानवस्य मस्तके उपविश्य किञ्चित् दूरं सुखेन गन्तव्यम् इति चिरात् मम महती आशा आसीत् । अद्य भवता मम आशा सफलीकृता । इदानीं भवतः किमपि उपकारं कर्तुम् इच्छामि । तत्र दृश्यते खलु अश्वत्थवृक्षः, तत्रैव मम वासस्थानम् अस्ति । माम् एवमेव वहन् तावत्पर्यन्तं नयतु'' इति वनदेवता उक्तवती ।

'अस्तु' इति उक्त्वा सीतारामः महता कष्टेन अश्वत्थवृक्षपर्यन्तं वनदेवतां वहन् गतवान् ।

''अलम् एतावता । महान् प्रमोदः जातः । कण्डोलम् अधः अवतारयतु'' इति वनदेवता सन्तोषेण उक्तवती ।

सीतारामः कण्डोलं शनैः अधः स्थापितवान् । वनदेवता कण्डोलतः अवतीर्य दृष्टिगोचरा भूत्वा 'भवान् यत् इच्छति, तत् पृच्छतु' इति उक्तवती ।

''अहं किमपि न इच्छामि । एतावता एव विमोचनं दत्तवती खलु, तदेव मम भाग्यम्'' इति दीर्घं निश्वसन् सीतारामः उक्तवान् ।

'संशयः मास्तु सीताराम ! धैर्येण पृच्छतु' इति पुनः वनदेवता आग्रहपूर्वकं पृष्टवती ।

''एवं तर्हि मम रिक्तः कण्डोलः मधुरैः आम्रफलैः यथा पूर्णः भवेत्, तथा करोतु । श्वः अन्यं ग्रामं गत्वा विक्रयणं करोमि'' इति उक्तवान् सीतरामः ।

एतावत् अल्पं प्रयोजनं पृच्छति वा ? अस्तु, यदा भवान् स्वीयग्रामसमीपं गच्छति, तदा कण्डोलः फलैः पूर्णः भविष्यति'' इति वनदेवता उक्तवती ।

सीतारामः स्वीयम् असन्तोषं प्रकटयन् उक्तवान्-''भवती यत् दातुम् इच्छति तत् अत्र एव ददातु । विलम्बः किमर्थम् ? भवती प्रायः मां वञ्चयति'' इति ।

तस्य वचनं श्रुत्वा वनदेवता उच्चैः हसन्ती ''नूनं भवान् अतीव मुग्धः । भवतः ग्रामः इतः बहुदूरे अस्ति । तावत्पर्यन्तं फलयुक्त-

कण्डोलवहनं क्लेशदायकं भवति इति अहं त्वथा उक्तवती। भवतु, भवतः इच्छानुसारेण इदानीम् एव भवतः कण्डोलः मधुरैः आम्रैः पूर्णः भवति" इति उक्त्वा वनदेवता अगोचरा अभवत्।

सीतारामः फलकण्डोलं मस्तके वहन् गृहं गतवान्। फलपूर्णं कण्डोलं दृष्ट्वा, तस्य पत्नी नागाम्बा 'हन्त हन्त।' किमिदं भोः? अद्य विपण्यां न कोऽपि फलानि क्रीतवान् वा?' इति पृष्टवती।

सीतारामः सर्वं वृत्तान्तं तस्याः पुरतः कथितवान्।

तत्सर्वं श्रुत्वा सा क्रोधेन दुःखेन च 'हा हन्त, कीदृशी मन्दबुद्धिः भवतः। एतादृशः सुवर्णावकाशः नष्टः किल? महाशक्तिसम्पन्नायाः वनदेवतायाः पुरतः केवलं फलानां प्रार्थना वा? यथा अस्माकं दारिद्र्यस्य नाशः भवेत्, तथा बहुमूल्यानि रत्नानि वा माणिक्यानि वा प्रष्टुम् अपि विवेकः न आसीत् वा? कीदृशी मूर्खता!" इति प्रलपितवती।

अनन्तरं नागाम्बा कण्डोलतः एकं गृहीत्वा छुरिकया तस्य एकं शकलं छित्वा खादितवती। तदा महता आश्चर्येण 'अहो! कीदृशी स्वादुता! मम जन्मनः आरभ्य एतादृशं स्वादुफलं न खादितवती। भवान् अपि खादतु! एकैकस्य फलस्य दशरूप्यकाणि इति वदतु। जनाः अहमहमिकया क्रीणन्ति" इति उक्तवती।



परेद्युः सीतारामः वेङ्कटपुरं गत्वा तत्र विपण्याम् एकैकस्य फलस्य दशरूप्यकाणि इति वदन् उपविष्टवान्। तस्य वचनं श्रुत्वा जनाः हसन्तः तथैव गतवन्तः। अन्ते एकः धनवान् एकं फलं क्रीत्वा तस्य स्वादुताम् आस्वाद्य महता आनन्देन पुनः दशफलानि क्रीतवान्। तं दृष्ट्वा अन्ये जनाः उत्तरक्षणे एव अवशिष्टानि सर्वाणि फलानि क्रीतवन्तः। सीतारामः तस्मिन् दिने दशगुणितं लाभं प्राप्तवान्। तेन अतीव सन्तुष्टः सः गृहं गतवान्।

अनन्तरं सीतारामः यथाक्रमम् एकां फलवाटिकां गत्वा उत्तमानि आम्रफलानि क्रीत्वा वेङ्कटपुरस्य पार्श्वे स्थितं ग्रामं गतवान्। किन्तु तत्र तस्य फलानि न कोऽपि क्रीतवान्। "हाः



वेङ्कटपुरे यादृशानि फलानि अनीतानि, तादृशानि एव आनयतु" इति उक्त्वा गतवन्तः। तेन सीतारामः चिन्ताग्रस्तः जातः।

सायङ्कालानन्तरं सीतारामः वनदेवतायाः अश्वत्थवृक्षस्य समीपं गत्वा उच्चस्वरेण "भोः! वनदेवते! भवती शुभकामनया मह्यं यत दत्तवती, तेन इदानीं मम महत् अनिष्टं जातमस्ति।" इति आक्रोशं कर्तुम् आरब्धवान्।

तदा वनदेवता तस्य पुरतः प्रत्यक्षा भूत्वा "वत्स, कुतः? किं जातम्?" इति पृष्टवती।

सीतारामः जातां घटनां कथितवान्। वनदेवता तस्य विषये दयार्द्रा भूत्वा "एवं जातं वा? भवतु, अन्यत् किमपि पृच्छतु, दास्यामि" इति उक्तवती।

तर्हि मह्यं एतत्कण्डोलपूरं सुवर्णमेव ददातु" इति पृष्टवान् सीतारामः।

"इदं गृह्णातु। किन्तु जागरूकतया एतत् नयतु" इति उक्त्वा वनदेवता तिरोभूता।

सीतारामः सुवर्णपूर्णं कण्डोलं मस्तके स्थापयन् गृहं प्रति प्रस्थितवान्। किन्तु मार्गे वीरभद्रः इति कश्चित् कुख्यातः चोरः सहसा तस्य पुरतः आगत्य "आम्रफलानां कण्डोलं अधः स्थापयित्वा तूष्णीं धावतु। किमपि प्रत्युत्तरं मास्तु" इति आग्रहात् उक्तवान्।

किन्तु बलिष्ठः सीतारामः धैर्येण तत्रैव दृढं स्थित्वा "भवान् वीरभद्रापेक्षया अपि बलवान् भवतु। मम भयं नास्ति। प्राणान् त्यजामि, किन्तु कण्डोले स्थितं वस्तु कदापि न ददामि" इति उक्तवान्।

आम्रफलानां कृते प्राणान् अपि त्यजामि इति वचनं श्रुत्वा वीरभद्रः आश्चर्येण "अहमेव वीरभद्रः, जानाति वा!" इति उक्त्वा कटिप्रदेशे स्थितं खड्गं गृहीतवान्। द्वयोः मध्ये परस्परम् आक्रमणं सञ्जातम्। महाबलिष्ठः चोरः वीरभद्रः सीतारामं हन्तुं न अपेक्षितवान्। केवलं तं भापयितुं तस्य भुजे खड्गेन एकं क्षतं कृतवान्।

सीतारामः उच्चैः आक्रोशं कुर्वन् "रे वीरभद्र! एतावत् सुवर्णम अपहृत्य भवान् कदापि सुखेन न जीवति इति उक्त्वा ततः धावितवान्।

वीरभद्रस्य सम्पूर्णविषयं महाराजः जानाति स्म । तं हत्वा वा जीवन्तम् एव वा यः आनयति तस्मै लक्षरूप्यकाणि बहुमानरूपेण दीयन्ते इति सः उद्घोषणं कारितवान् आसीत् । परेद्युः सीतारामः अश्वत्थवृक्षस्य समीपं गत्वा, वनदेवताम् आहूय जातं सर्वं वृत्तान्तम् उक्तवान् ।

तस्य कथनं श्रुत्वा वनदेवतायाः मुखं क्रोधेन आरक्तं जातम् । "भवान् अतीव मन्दभाग्यः । इतःपरं कदापि अस्य अश्वत्थवृक्षस्य छायामपि न स्पृशतु" इति सा उक्तवती ।

तस्याः वचनं श्रुत्वा सीतारामः अपि क्रोधेन "यदा भवती मम मस्तकस्थिते कण्डोले उपविष्टवती, तदारभ्य मम दुष्कालस्य आरम्भः अभवत् ।" इति निन्दितवान् ।

तत्वचनं श्रुत्वा वनदेवता पूर्वापेक्षया अधिककोपेन "रे क्षुद्रमानव ! माम् एवं भवान् भाययति वा ? भवतः दुर्लक्षणं मुखं अत्र पुनः कदापि न प्रदर्शयतु । अपि च, अद्य भवतः मुखं प्रथमतया यः द्रक्ष्यति सः रक्तं वमन् मरिष्यति । गच्छतु इतः" इति शापं दत्त्वा अगोचरा जाता ।

दुःखेन चिन्तयन् अधोमुखः भूत्वा सीतारामः गच्छति स्म । तदा पार्श्वस्थवृक्षतः महान् अट्टहासशब्दः श्रुतः ।

सीतारामः तस्मिन् पार्श्वे दृष्टवान् । "किं रे ! पुनः सुवर्णं न आनीतवान् वा" इति पृच्छन् चोरः वीरभद्रः तस्य पुरतः आगतवान् । तत्क्षणमेव 'हा !' इति आक्रोशनं कुर्वन् रक्तं वमन् तत्रैव पतित्वा प्राणान् त्यक्तवान् ।

तदा सहसा सीतारामः महाराजस्य उद्घोषणं स्मृतवान् । सः चोरस्य शवं भुजे आरोप्य नगरं गतवान् । "तेन सह सम्यक् मुष्टामुष्टिकलहं कृत्वा तम् अहं हतवान्" इति ग्रामस्थान् कथितवान् ।

अनन्तरं सप्ताहाभ्यन्तरे महाराजः सीतारामम् आहूय वीरभद्रस्य नाशनेन सन्तुष्टः सन् लक्षरूप्यकाणि बहुमानरूपेण दत्तवान् ।

वनदेवता क्रोधेन शापं दत्तवती । किन्तु सः शापः अपि अनुग्रहरूपः एव जातः इति सीतारामः महान्तं सन्तोषं प्राप्तवान् ।





# कर्मफलम्

ब्रह्मदत्तः काशीं पालयन् आसीत्। तेषु दिनेषु बोधिसत्वः वानररूपेण जन्म प्राप्तवान्। तस्य नाम आसीत् नन्दीयः। नन्दीयस्य एकः सहोदरः अपि आसीत्। नन्दीयः हिमालय-पर्वतप्रदेशे निवसताम् अशीतिसहस्रवानराणां नायकः आसीत्। नन्दीयस्य माता वृद्धा। तस्याः पालनपोषणं नन्दीयस्य एव।

नन्दीयः तदीयेन अनुजेन सह प्रतिदिनं अरण्यसञ्चारं कृत्वा मधुराणि विविधफलानि आनयति स्म। सेवकद्वारा तानि फलानि मातुः समीपं प्रेषयति स्म।

एकस्मिन् दिने नन्दीयः मातरं द्रष्टुम् आगतवान्। मातरं दृष्ट्वा चकितः खिन्नः च नन्दीयः उक्तवान्- "अम्ब! भवती किमर्थम् एवं दुर्बला जाता? अहं तु प्रतिदिनं मधुराणि फलानि यथेष्टं प्रेषितवान् एव। तानि भवती न खादति वा? किमर्थं भवती एवं दुर्बला? कोऽपि रोगः भवतीं न बाधते किल?" इति।

"पुत्र! भवान् प्रतिदिनं फलानि प्रेषितवान् वा? मया कदापि तानि न प्राप्तानि एव। यदि पौष्टिकानि फलानि लभ्येरन् अहं कुतः दुर्बला भवामि स्म? वृद्धा अहं स्वयं बहिः गत्वा आहारं सम्पादयितुम् अशक्ता" इति उक्तवती सा माता।

नन्दीयः एतत् श्रुत्वा खिन्नः। 'किं प्रवृत्तं स्यात्?' इति सः ज्ञातवान्। त्वरया हिमालयं प्राप्तवान्। तत्र अनुजं समग्रं वृत्तान्तम् श्रावयित्वा उक्तवान्- "अनुज! अहं गृहे स्थित्वा मातुः योगक्षेमस्य व्यवस्थां करिष्यामि। भवान् अत्र एव स्थित्वा अस्माकं गणस्य व्यवस्थां परिशीलयतु" इति।

"सहोदर! अहम् अपि भवता सह आगमिष्यामि। मातुः योगक्षेमव्यवस्थायां साहाय्यं करिष्यामि" इति उक्तवान् अनुजः।

"जातककथा"

एवं चिन्तयित्वा उभौ अपि गृहं प्राप्तवन्तौ। तत्र एकस्मिन् विशालवृक्षे उत्तमं गृहं निर्माय तत्र मातरं स्थापितवन्तौ। श्रद्धया तस्याः सेवां कर्तुम् आरब्धवन्तौ।

तेषु दिनेषु कश्चित् ब्राह्मणपुत्रः तक्षशिलायां प्रसिद्धस्य गुरोः समीपे विद्याभ्यसं कुर्वन् आसीत्। विद्याभ्यसं समाप्य सः स्वप्रदेशं गन्तुं गुरोः अनुमतिं पृष्टवान्। गुरुः शिष्यम् उपदिष्टवान्- "शिष्योत्तम! भवान् श्रद्धया विद्याम् अर्जितवान्। एतेन अहं सन्तुष्टः अस्मि। भवता अविचार्य कदापि कार्यं न करणीयम्। अविचार्य कृतं चेत् भवतः नाशः अपि भवेत्। अतः जागरूकः भवतु। एषः एव मम उपदेशः" इति। अनन्तरम् आशीर्वाद-पूर्वकं तं प्रेषितवान्।

गुरुणा अनुमतः सः युवकः काशीनगरं प्राप्तवान्। विवाहितः भूत्वा गृहस्थधर्मम् अपि आश्रितवान्। उदरपूरणार्थं सः कमपि निश्चितं मार्गं न अनुसृतवान्। एवम् एव दिनानि अतीतानि। अन्ते सः मृगयावृत्तिम् आश्रितवान्। पशुपक्षिणां मारणं कृत्वा, मांसविक्रयणं कुर्वन्, सम्पादितेन धनेन कुटुम्ब-पोषणं करोति स्म। ब्राह्मणस्य मृगया निषिद्धा। एतत् जानन् अपि सः मृगयां वृत्तिरूपेण आश्रितवान्। सः वा किं करोति? कथञ्चित् उदरं पूरणीयं किल?



एकस्मिन् दिने समग्रे अरण्ये अटिते अपि कुत्रापि कोऽपि पशुः न लब्धः। निराशः सः प्रत्यागमनसमये एकं वृक्षं दृष्टवान्। तदा तत्र नन्दीयः मातरं भोजयित्वा तस्याः पृष्ठतः अनुजेन सह उपविष्टः आसीत्। ते तं युवकं दृष्टवन्तः।

रिक्तहस्तः कथम् अहं गृहं गमिष्यामि? इति सः युवकः चिन्तितवान्। वृद्धमातरं वानरीम् उद्दिश्य बाणप्रयोगार्थं सिद्धः अभवत्। एतत् नन्दीयः दृष्टवान्। सः अनुजम् उक्तवान्- "अनुज! तत्र पश्यतु, सः युवकः इदानीं मातरम् उद्दिश्य बाणप्रयोगं करोति। अहं बाणस्य लक्ष्यः भविष्यामि। मम मरणा-

नन्तरं भवान् मातुः पालनपोषणादिकं करोतु।'' एवम् उक्त्वा सः वृक्षतः अधः आगतवान्।

तत्र तं युवकम् उक्तवान्– ''मित्र! भवान् मम मातरं न मारयतु। सा च वृद्धा। तस्याः मारणस्य अपेक्षया भवान् माम् एव मारयतु'' इति।

''अस्तु नाम'' इति वदन् सः दुष्टः ब्राह्मणयुवकः नन्दीयम् एव मारितवान्। एतावता अपि सः युवकः न तृप्तः।

नन्दीयस्य मारणानन्तरं सः पुनः अपि वृद्धमातरं मारयितुम् उद्युक्तः। एतत् दृष्ट्वा नन्दीयस्य अनुजः अधः आगतवान्। नन्दीयेन उक्तानि वचनानि पुनरुच्चरितवान। युवकः तस्य वचनानि अङ्गीकृतवान्। तथैव तं सहोदरं निर्दयं मारितवान् च।

युवकः चिन्तितवान्– 'अद्य एतावत् एव पर्याप्तम्' इति। किन्तु अन्यक्षणे एव तस्य विचारः परिवृत्तः। निर्दयः सः तस्याः तृतीयायाः वृद्धायाः वानर्याः उपरि अपि बाणप्रयोगं कृतवान्। तां मारितवान् च।

अनन्तरं सः त्रीन् अपि वानरान् एकस्मिन् दण्डे बद्ध्वा स्वगृहं गतवान्। ग्रामस्य सीमायाम् एव तेन वार्ता प्राप्ता यत् तदीयं गृहम् अग्निना ज्वलत् अस्ति। पत्नीपुत्रादयः अन्तः एव सन्ति इति।

सः धावन् महता धैर्येण दह्यमानं गृहं प्रविष्टवान्। तदा अकस्मात् भूमिः विभक्ता। एषः कया अपि शक्त्या अधः नीयमानः इव भूमिकुहरं प्रविष्टः। सः मनसि एव खेदम् अनुभूतवान्– ''मदीयः आचार्यः उक्तवान् आसीत् यत् क्रूरं कर्म न करणीयम् इति। तथापि अहं कृतवान्। तस्य फलम् इदानीं मया अनुभूयते। इदानीं पश्चात्तापेन किं प्रयोजनम्? अहं विनाकारणं निरपराधिनां वानराणां हननं कृतवान्। एवं यदि मया न कृतं स्यात् तर्हि मम गृहं न अज्वालयिष्यत्, पत्नीपुत्राः न अमरिष्यन् च'' इति।

एवं चिन्तयता तेन नरकलोकः प्राप्तः।





## अधिकार-परिवर्तनम्

आंग्लसेनया दिल्लीनगरं स्वाधीनं आनीतम् । एतेन सैनिकक्रान्तिः क्षीणतां गता । तथापि आंग्लसेनया यदा दिल्लीनगरस्य उपरि आक्रमणं कृतं तदा जॉन् निकल्सन् नामकः आंग्लसेनाधिकारी क्रान्तिकारिणां गोलकास्त्रेण प्रहतः मृतः च ।

क्रान्तिकारिभिः सैनिकैः अन्तिममोगलशासकः बहादुरशाह-महोदयः स्वनायकत्वेन अङ्गीकृतः आसीत् । सः अपि इदानीं शक्तिहीनः । अतः बहादुरशाहः स्वपूर्वजस्य हुमायूँखानस्य स्मारकस्य पुरतः दुष्टस्य मेजर् हड्सनस्य सन्निधौ शरणागतिम् अङ्गीकृतवान् ।





स्मारकस्य पृष्ठतः बहादुरशाहस्य पुत्रद्वयं निलीनम् आसीत् । हड्सनः एतत् ज्ञात्वा तौ बालकौ बन्दी कृतवान् । अनन्तरम् तौ नग्नौ कृत्वा भीतानां प्रजानां पुरतः एव गोलकास्त्रप्रयोगेण मारितवान् ।



बहदुरशाहः रङ्गून् कारागारे स्थापितः। सः १८६२तमे वत्सरे कारागारे एव मरणं प्राप्तवान्। एतेन मोगलसाम्राज्यं समाप्तिं गतम्। अनन्तरम् अपि अवशिष्टौ तदीयौ पुत्रौ दारिद्र्येण एव जीवनं यापितवन्तौ।

कम्पनीसैनिकाः इदानीं प्रतीकारभावनया उन्मत्ताः जाताः। ते अतीव हिंस्ररूपेण व्यवहारं आरब्धवन्तः। निरपराधिनः ग्रामीणान् वृक्षेषु उत्तोलितवन्तः, मारितवन्तः च। असंख्याः ग्रामाः तैः भस्मसात्कृताः।






भारते प्रचलितस्य कम्पनीशासनस्य विषये इंग्लण्डदेशे महती चर्चा समुत्पन्ना। अन्ते भारतदेशस्य पालनाधिकारः विक्टोरियाराज्ञ्याः वशे अर्पणीयः इति निर्णयः अङ्गीकृतः। सा 'कैसर् - ए - हिन्द्' नामिकया प्रशस्त्या सम्मानिता।

कम्पनीसर्वकारेण नियुक्तः गवर्नर् एव इदानीं वैसराय् (राज्ञ्याः प्रतिनिधिः) सञ्जातः।१८५८तमे वत्सरे नवेम्बरमासे प्रथमदिनाङ्के एकां सभाम् आयोज्य वैसराय् केनिंग् महोदयः अधिकारस्य परिवर्तनम् उद्घोषितवान् ।





एतदनन्तरम् शासनव्यवहारेषु बहुविध-परिवर्तनानि जातानि । मुम्बयि-मद्रास्-कलकत्तादिषु उच्चन्यायालयाः स्थापिताः । शिक्षणस्य प्राधान्यं दत्तम्। विद्याप्रसारार्थं विभिन्नप्रान्तेषु शिक्षा-विभागाः आरब्धाः ।

१८८०तमे वत्सरे लार्ड् रिप्पन् वैसराय् जातः । एषः सज्जनः , आदर्शभावनाभिः प्रेरितः , सहृदयी च। एतस्य शासने क्षेत्रीयपरिषदः नगरपालिकाः च तत्र तत्र स्थापिताः । भारतीयेभ्यः अधिकाराः अपि किञ्चित् दत्ताः ।





इतःपूर्वं भारतीयः आंग्लेयस्य विषये न्यायनिर्णयं वक्तुम् अनधिकारी आसीत् । एषः पक्षपातः रिप्पन् महोदयाय न अरोचत । सः आंग्लेयेभ्यः भारतीयेभ्यः च न्यायाधीशेभ्यः समानम् अधिकारम् दातुं निश्चितवान् । एतेन भारते निवसन्तः आंग्लेयाः कुपिताः ।

एतेन हताशः रिप्पन् त्यागपत्रं दत्त्वा इंग्लेण्ड्देशं प्रतिनिवृत्तः। तस्य प्रामाणिकतया स्नेहभावनया च आकृष्टाः भारतीयाः अभूतपूर्वं आदरं प्रकटयन्तः तं प्रेषितवन्तः । एतदनन्तरं "एका राष्ट्रिया संस्था स्थापनीया" इति भारतीयानां मनसि भावना उत्पन्ना ।





१८८५ तमे वत्सरे राष्ट्रिय कांग्रेस् स्थापिता । एतस्याः संस्थायाः प्रथमाधिवेशनं कलकत्तानिवासिना डब्ल्यू. सि. ब्यानर्जिमहोदयस्य अध्यक्षतायां मुम्बयि-नगरे सम्पन्नम् । सेवानिवृत्तः आंग्लाधिकारी आलन् आक्टावियन् ह्यूममहोदयः काँग्रेस् स्थापने प्रेरणादायकः आसीत् ।



# अम्बापुरम्

पूर्वम् अनङ्गराज्यम् चक्रधरमहाराजः परिपालयति स्म। तदीयं राजभवनम् अतीव पुरातनम् आसीत्। सहस्रशवर्षेभ्यः पूर्वम् एतत् भवनं निर्मितम् आसीत्।

महाराजः चिन्तितवान् -"गृहस्य समीकरणं अपव्ययाय एव। महता व्ययेन समीकृतं चेत् अपि एतत् शोभायमानं न दृश्यते" इति।

चक्रधरः एतस्य पुरातनभवनस्य विषये एव सर्वदा चिन्तयति। आत्मग्लानिम् अनुभवति। अन्ते सः मनसि एकं निर्णयम् अङ्गीकृतवान् -"पुरातनभवने निवासः महाराजस्य मम अगौरवकरम्। अतः अहम् एतत्क्षणे एव एतत्गृहं त्यक्त्वा निर्गच्छामि। यत्र सुन्दरं स्थलं दृश्यते तत्र नवीनं राजभवनं निर्मापयिष्यामि" इति।

एतत्समनन्तरम् एव सः स्वपरिवारेण सह ततः निर्गतवान्। सुन्दरं स्थलं अन्विश्य गच्छन् एकस्याः नद्याः तीरं प्राप्तवान्।

नदीतीरप्रदेशस्य सौन्दर्यं दृष्ट्वा राजा परमानन्दितः। अवर्णनीयेन आनन्देन सः पुलकितः। नदीतीरे सर्वत्र हरिद्वर्णः दृश्यते स्म। उन्नताः वृक्षाः, शीतलः सुगन्धयुतः च वायुः! पक्षिणां मधुरः कलरवः एतस्य प्रदेशस्य रमणीयतां वर्धयति स्म। नद्याः कलकलनिनादः मञ्जुलतया श्रूयते स्म।

एतं प्रदेशम् आगतः महाराजः नवोत्साहं प्राप्तवान्। राजा निश्चितवान्- "एषः प्रदेशः अतीव रमणीयः अस्ति। जलविहारार्थं पार्श्वे एव नदी अपि अस्ति। अस्मिन्नेव विशालप्रदेशे मदीयं राजभवनं निर्मापयामि" इति।

अतः 'एषः प्रदेशः कस्य? इति विचार्य आगच्छन्तु' इति सेवकान् आज्ञापितवान्।

सेवकाः तस्य प्रदेशस्य स्वामिनम् अन्विष्यन्तः ततः निर्गताः। समीपे एव तैः

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा।"



किल ? अतः वयं भवत्याः कुटीरम् इतः निष्कासयितुम् इच्छामः। भवती प्रतिफलरूपेण किम् इच्छति ? वदतु'' इति।

तदा वृद्धा उक्तवती- ''मन्त्रिमहोदय ! महाराजस्य भवननिर्माणे अहं किं विरोधं प्रकटयामि वा ? राजभवननिर्माणं, मम अपि सन्तोषाय एव। किन्तु, पश्यतु, एषः कुटीरः मम प्रपितामहस्य प्रपितामहेन ततोऽपि पूर्वजेन वा निर्मितः। इदानीम् अहं वृद्धा अस्मि। दारिद्र्यपीडिता अहं कुटीरस्य समीकरणे अपि असमर्था। तथाऽपि अहम् इतः अन्यत्र न गच्छामि। दैवम् अनुकूलं चेत् कदाचित् अहं कुटीरस्य समीकरणं कारयिष्यामि एव। मरणतः पूर्वम् एतत् साधयित्वा गृहं मम पुत्र्यै दातुम् इच्छामि अहम्। अतः कृपया क्षाम्यतु, एतत् कुटीरम् अहं न त्यजामि।''

मन्त्री वृद्धां पुनः बोधितवान्- ''आर्ये ! भवत्याः वचनम् अहम् अङ्गीकरोमि। किन्तु अशक्यस्य विषये भवत्या आशा न प्रदर्शनीया। भवती एतत् लघुप्रदेशं त्यजतु। प्रतिफलरूपेण राज्ये भवती यत्र इच्छति तत्र दशगुणिता भूमिः दीयते। अथवा धनम् एव आवश्यकं चेत् भवती यावत् इच्छति तावत् दीयते। भवत्याः इच्छां निस्सङ्कोचं वदतु। एतत्क्षणे एव तां पूरयिष्यामः वयम्।''

एतत् श्रुत्वा वृद्धा निर्भयपूर्वकम् उक्तवती- ''महोदय ! अहं विशालं प्रदेशं वा धनराशिं वा

एकः कुटीरः दृष्टः। सर्वे कुटीरस्य समीपं गतवन्तः। राजा अपि तान् अनुसृतवान्।

गृहस्य अन्तः नवतिवर्षीया एका वृद्धा उपविष्टा आसीत्। 'स्वयं महाराजः, तदीयाः परिवारजनाः च मम कुटीरम् आगतवन्तः' इति ज्ञात्वा सा सन्तुष्टा। आदरपूर्वकं सर्वेषां सत्कारं कृत्वा सा पृष्टवती -''महानुभावाः ! भवन्तः किमर्थम् अत्र आगताः इति अहं न जानामि। मत्तः किमपि अपेक्षन्ते वा ?'' इति।

तदा मन्त्री उक्तवान् -''आर्ये ! एतं प्रदेशं दृष्ट्वा अस्माकं प्रभुः आकृष्टः अस्ति। अत्र एकं राजभवनं निर्मातव्यम् इति महाराजस्य इच्छा। एतदर्थं विशालः प्रदेशः अपेक्षितः

न इच्छामि। पूर्वजैः निर्मितम् एतं कुटीरं त्यक्त्वा गन्तुम् अहं न इच्छामि एव। यदि इच्छति, भवदीयः महाराजः अस्मिन् विशाले प्रदेशे अन्यत्र कुत्रापि राजभवनस्य निर्माणं करोतु नाम। महाराजं वदतु- पुनः कुटीर-त्यागविषये आग्रहः न करणीयः इति।"

वृद्धायाः एतत् वचनं श्रुत्वा राजपरिवारस्य सर्वे सदस्याः कुपिताः। मन्त्री कोपेन उक्तवान्- "वृद्धे! भवती केन सह वार्तालापं कुर्वती अस्ति इति स्मरति किल? अल्पः कुटीरः कुत्र? राजा कुत्र? कीदृशम् औद्धत्यम् एतत्! रे भटाः! इदानीम् एव एतत् कुटीरम् उन्मूलयन्तु" इति।



तदा राजा अग्रे आगत्य सर्वान् शान्तं स्थातुम् उक्तवान्। यतः सः एकः एव वृद्धायाः वचनानि सश्रद्धं श्रुतवान् आसीत्। वचनस्य मर्म अपि ज्ञातवान् आसीत्। वृद्धायाः वचनेन महाराजस्य अज्ञानं दूरङ्गतम् आसीत्।

जन्मस्थानविषये वृद्धायाः ममतां, पूर्वजानां विषये श्रद्धां भक्तिं च दृष्ट्वा राजा विस्मितः। एतेन, आत्मना यः सङ्कल्पः कृतः आसीत् सः कीदृशः दोषपूर्णः इति राजा ज्ञातवान्। "वृद्धायाः यावान् विवेकः अस्ति तावान् विवेकः मम नास्ति किल?" इति राजा खेदम् अनुभूतवान्।

अनन्तरं राजा मन्त्रिणं परिवारसदस्यान् च समीपे आहूय उक्तवान् "एतया वृद्धया अम्बया अहं सम्यक् शिक्षितः। पुरातनस्य राजभवनस्य जीर्णोद्धारपूर्वकं मया पूर्वजानां गौरवं रक्षणीयम् आसीत्। किन्तु अहं मदीयं कर्तव्यं विस्मृतवान्। भाग्यवशात् वयम् अत्र आगतवन्तः। एषा अम्बा मदीयं कर्तव्यं स्मारितवती।

इदानीम् अहं राजभवनं न प्रविशामि। अस्य वृक्षस्य अधः एव निवसामि। अत्र एव स्थित्वा राजभवनस्य जीर्णोद्धारं करिष्यामि। एवं पूर्वजैः निर्मितं भवनं यदा नवीकृतं भविष्यति तदा एव राजभवने मम प्रवेशः भविष्यति। तावत्पर्यन्तं मम वासः अत्र एव।" एवं राजा स्वकीयं निर्णयम् उद्घोषितवान्।

महाराजस्य वचनस्य तात्पर्यं कैश्चित् एव

ज्ञातम्। अवशिष्टाः सर्वे महाराजः मतिविकलः इति चिन्तितवन्तः। राजा तु तद्दिनात् एव वृक्षस्य अधः स्वकीयां वसतिम् आरब्धवान्।

राजा एव स्वयं वृक्षस्य अधः निवसति किल! अतः नगरप्रमुखाः, शासकमुख्याः, सर्वेऽपि तत्र आगतवन्तः। तं प्रदेशम् उत्तमं मन्यमानाः तत्र एव वसतिम् आरब्धवन्तः। एतेन सर्वे नागरिकाः अपि तत्र आगत्य, लघु-कुटीरान् निर्माय स्वस्वजीवनकार्यम् आरब्ध-वन्तः।

अल्पे एव काले सः प्रदेशः नगररूपेण परिवर्तितः। अस्मिन् नगरे यथेष्टं सस्य-समृद्धिः अपि अस्ति। अतः नगरस्य आधुनि-कता, ग्रामस्य सौकर्यम्, उभयम् अपि तत्र सम्मिलितम् आसीत्।

अस्मिन् नगरे कुटीराः निर्मिताः। प्रासादाः राजभवनानि च निर्मितानि। तथापि वृद्धायाः सः पुरातनः कुटीरः अबाधितम् आसीत्। यतः राजाज्ञा एव तथा आसीत् यत् केनापि वृद्धायाः कुटीरः न निष्कासनीयः इति।

वृद्धायाः विषये कृतज्ञतां प्रकटयन् राजा तस्याः कुटीरं नवीकारितवान्। एतावदेव न, तत्परिसरे यत् नगरं निर्मितं तस्य नाम 'अम्बापुरम्' इत्येव निश्चितवान्।

एतदनन्तरं महाराजः चक्रधरः वंशपरम्परातः प्राप्तं प्राचीनं राजभवनम् अपि नवीकारितवान्। स्वयम् एव कार्यं परिशीलयन् तत् भवनं सुन्दरं सुदृढं च कारितवान्। इदानीं तत् भवनं सद्योनिर्मितमिव शोभते!

चक्रधरः तत् राजभवनं स्वकीयराजकार्याणां केन्द्रं कृतवान्। किन्तु वसतिः तु अम्बापुरे निर्मिते स्वभवने एव। प्रतिदिनं पूर्वजनिर्मितं तत् राजभवनं गत्वा राजकार्याणि सर्वाणि समाप्य प्रत्यागच्छति स्म सः।

एवम् अम्बापुरे निवसन् राजा सुखेन जीवति स्म। तस्य प्रजाः अपि सुखेन जीवन्ति स्म।





# युक्तिमान्

सीतापुरम् इति कश्चित् ग्रामः। तं ग्रामं प्रति एकः मान्त्रिकः आगतवान्। "मम शरीरं परोपकारार्थम्। अहं देव्याः उपासकः। सर्वेषाम् उपकारं करोमि। मन्त्रप्रभावेण अहं सर्वेषां यत्किमपि रहस्यं ज्ञातुं प्रभवामि" इति सः स्वयमेव आत्मश्लाघनं कुर्वन् आसीत्। ग्रामस्थाः सर्वे मुग्धाः सरलाः च। मान्त्रिकः सर्वान् वञ्चयन् बहुधनं सम्पादितवान्। तस्मिन् ग्रामे कनकराजः इति कश्चन आसीत्। तस्य एतादृशमान्त्रिकाणां विषये श्रद्धा एव न आसीत्। सः एवं चिन्तयति स्म "एतादृश-जनाः उदरम्भरिणः कमपि वेषम् अवलम्बन्ते। मुग्धाः जनाः यावत्पर्यन्तं भवन्ति तावत्पर्यन्तं एतादृशवञ्चकाः अपि भवन्ति एव" इति।

एकस्मिन् दिने तद्ग्रामस्थः एकः धनिकः कमलनाथः कनकराजस्य समीपम् आगत्य उक्तवान्- "तेन मान्त्रिकेण मम बहु उपकारः कृतः। तदर्थं तस्मै मान्त्रिकाय प्रीत्या मया शतं रूप्यकाणि अद्य ससन्तोषं दीयन्ते। भवान् सर्वदा 'सः मान्त्रिकः वञ्चकः' इति कथयति किल? सः वञ्चकः इति यदि साधारं साधयति तर्हि भवते एव अहं शतं रूप्यकाणि ददामि" इति।

कनकराजः किञ्चित् आलोच्य उक्तवान्- "अस्मिन् ग्रामे सः मान्त्रिकः एकः महान् योगी इत्येव सर्वेषाम् अभिप्रायः। अपि च अन्यग्रामस्थाः अपि तस्य मान्त्रिकस्य प्रभावेण आवृताः। बहु धनमपि तस्मै यच्छन्ति। एवं स्थिते अहम् एकाकी 'सः वञ्चकः' इति कथं साधयामि? एतत् बहु कष्टकरम्" इति।

कमलनाथः एकम् उपायं सूचितवान्। "भवान् एवं करोतु। पूर्वं भवान् 'शतं रूप्यकाणि चोरेण अपहृतानि' इति उक्त्वा मम सकाशात् शतं रूप्यकाणि ऋणत्वेन

स्वीकृतवान् किल ? चोर्यविषयं मान्त्रिकस्य समीपे उक्त्वा 'केन अपहृतानि' इति पृच्छतु। यदि सः सत्यं वदति तर्हि भवान् धनं पुनः प्राप्नोति। तदेव धनं मह्यं ददातु। अहं तद्धनं मान्त्रिकाय ददामि'' इति।

''यदि मान्त्रिकः सत्यं वक्तुं न प्रभवति तर्हि किं करोति भवान्?'' इति पृष्टवान् कनकराजः।

''तदा, भवता मह्यं यत् धनं दातव्यम् आसीत् तत् न ददातु। 'सः मान्त्रिकः वञ्चकः' इति ज्ञातं चेत् पुनः प्रतिफलदानस्य आवश्यकता एव न भवति। शतं रूप्यकाणि मम समीपे एव अवशिष्यन्ते। अतः अहं, भवता ऋणं प्रत्यर्पितं इति भावयामि'' इति उक्तवान् कमलनाथः।

कमलनाथस्य चातुर्यपूर्णं वचनं श्रुत्वा कनकराजः आश्चर्यचकितः। ''ऋणत्वेन दत्तं धनं प्रतिस्वीकर्तुम् एषः युक्तम् उपायं चिन्तितवान्'' इति सः चिन्तितवान्।

''अस्तु, गच्छावः'' इति उभावपि मान्त्रिकस्य समीपं गतवन्तौ। तस्मिन् समये मान्त्रिकस्य समीपे बहवः जनाः आसन्। मान्त्रिकः दीर्घं कञ्चुकं धृत्वा मृगचर्मासने उपविष्टः आसीत्। तस्य पुरतः अनेकप्रकारकाणि चित्राणि लिखितानि आसन्। चित्रमध्ये अस्थिद्वयम्, एकं कपालं च आसीत्। सः मान्त्रिकः नेत्रे निमील्य तदा तदा दन्तान् निष्पीड्य बद्धभृकुटिः भूत्वा मन्त्रपठनं कुर्वन् आसीत्।

कनकराजः तं नमस्कृत्य स्वस्य नाम उक्त्वा



"स्वामिन्! मम एका याचना अस्ति। किन्तु भवान् मम उपकारं करोति चेदपि अहं प्रतिफलं दातुं न शक्तः। यतः अहं दरिद्रः। 'प्रतिफलं विना भवता दरिद्राणां उपकारः क्रियते' इति मया श्रुतम्। अतः एव आगतवान्" इति उक्तवान्।

मान्त्रिकः नेत्रे उद्घाटय उक्तवान् "सत्यम्, अहं देव्याः उपासकः। भक्ताः सन्तोषेण यद्यत् यच्छन्ति तदेव देवी सानन्दं स्वीकरोति। अपि च प्रतिफलं विना दरिद्राणां सेवा कर्तव्या इत्यपि अहं देव्या आज्ञप्तः। अतः निःसङ्कोचं पृच्छतु" इति।

"दशदिनेभ्यः पूर्वं मम गृहे शतं रूप्यकाणि केनचित् अपहृतानि। तद्धनम् अहं एकस्मिन् वस्त्रे बन्धयित्वा गृहे एव एकत्र पार्श्वे स्थापितवान् आसम्। ग्रामे सर्वेऽपि भवतः समीपं भक्त्या आगच्छन्ति। अहम् एकः एव भवतः सन्निधिं न आगतवान्। अद्य एषः धनिकः कमलनाथः अनुरोधपूर्वकं मां भवतः समीपम् आनीतवान्। अतः तद्धनं केन अपहृतम् इति वदतु। पुनः यथा तत् धनं प्राप्तुं शक्यं तथा करोतु" इत्युक्तवान् कनकराजः।

मान्त्रिकः पुनः नेत्रे निमील्य एवम् आलोचितवान्- "अस्य एकस्य एव मम विषये श्रद्धा न असीत्। एषः अपि मम भक्तः भवति चेत् तदा ग्रामे कोऽपि मम विरोधी एव न भविष्यति। अपि च अन्येषु ग्रामेषु अपि मम प्रभावः अधिकतया प्रसरति। अतः





केनापि उपायेन अस्य कनकराजस्य साहाय्यं मया करणीयम्'' इति ।

मान्त्रिकः एवम् आलोच्य नेत्रे उद्घाटय गम्भीरेण स्वरेणं उक्तवान्- ''अहो ! ज्ञातम् । सर्वोऽपि देव्याः महिमा । धनं केन चोरितम् इति मया ज्ञातम्'' इति

कनकराजः विनयेन पृष्टवान्- ''स्वामिन् ! केन धनम् अपहृतम् ?''

''चोरः भवतः मित्रेषु अन्यतमः । तस्य नाम अहं न वदामि । 'तस्य अपराधः क्षन्तव्यः' इति देवी आज्ञापितवती । सः चोरः अस्यां रात्रौ शतं रूप्यकाणि आनीय मह्यं ददाति । भवान् श्वः अस्मिन्नेव समये आगत्य धनं स्वीकरोतु'' इति मान्त्रिकः उक्तवान् ।

कनकराजः 'अस्तु' इति अङ्गीकृत्य पुनः साष्टाङ्गनमस्कारं कृत्वा प्रतिनिवृत्तः ।

स्वस्य वचनं श्रुत्वा चोरः धनम् आनीय ददाति इति मान्त्रिकः चिन्तितवान् । शिष्यद्वारा ग्रामे सर्वत्र एतं विषयं प्रकटीकारितवान् । किन्तु कोऽपि धनं न आनीतवान् ।

अतः सः स्वस्य समीपे स्थितं धनमेव कनकराजाय दातुं निश्चितवान् ,दत्तवान् च ।

एतत्सर्वं दृष्ट्वा धनिकः कमलनाथः 'मान्त्रिकस्य, प्रभावेण एव कनकराजेन धनं पुनः प्राप्तम्' इति चिन्तितवान् । अतः पूर्वं यथा निश्चितं तथैव मान्त्रिकाय शतं रूप्यकाणि दत्त्वा कनकराजस्य सकाशात् धनं स्वीकर्तुं तस्य गृहं गतवान् ।

तत्र कनकराजः उक्तवान्- 'मान्त्रिकस्य कापि शक्तिः नास्ति इति तु सिद्धं किल ? अतः मया दातव्यं किमपि नास्ति' इति ।

तदा कमलनाथः कोपेन उक्तवान्- ''किम् ? किमर्थम् एवं वदति ? तस्य शक्तिः नास्ति इति भवता साधिता वा ? मान्त्रिकः चौरेण अपहृतं भवतः धनं दापितवान् किल ?'' इति ।

'मम धनं यदि अपहृतं स्यात् तदा मान्त्रिकस्य विषये श्रद्धा भवेत्' इति उक्तवान् कनकराजः ।

''अये ! भवान् किम् एवं वदति ?'' इति पृष्टवान् कमलनाथः ।

''अहं यदा भवतः समीपे धनं याचितुम्

आगतवान् तदा ऋणं प्रष्टुं किमपि कारणम् आवश्यकम् आसीत् । अतः भवतः समीपे अहं 'चोरेण धनम् अपहृतम्' इति असत्यम उक्तवान् । एतादृशलघुविषयम् ज्ञातुम् अपि सः मान्त्रिकः न समर्थः । 'चोरः आगत्य धनं न दत्तवान्' इति यदि मान्त्रिकः वदति तदा तस्य विषये सर्वेषां अनादरः भवेत् । अत एव सः भीत्या स्वीयं धनमेव मह्यं दत्तवान्'' इति कनकराजः उक्तवान् ।

''एतत् सर्वं तत्रैव सर्वेषां पुरतः वक्तव्यम् आसीत् । किमर्थं तथा न कृतम् ?'' इति पृष्टवान् कमलनाथः ।

''ग्रामे सर्वेऽपि तेन वञ्चिताः। स्वकीयमौढ्येन ते तं मान्त्रिकमेव दैवमिति भावयन्ति । अहं यदि सत्यं वदामि सर्वे 'एषः असत्यं वदति' इति मामेव ताडयन्ति । ये विचारं कुर्वन्ति ते एतादृशजनानां विषये श्रद्धामेव न कुर्वन्ति । मुग्धजनानां समीपे यदि वदामि तदा प्रयोजनम् अपि नास्ति । अतः एव अहं न कथितवान्'' इति कनकराजः उक्तवान् ।

''भवता सत्यं वक्तव्यम् आसीत् । सर्वे ताडयितुम् आगच्छन्ति चेत् अहं तदा निग्रहं कुर्याम्'' इति कमलनाथः उक्तवान् ।

''एतत् बहु समीचीनम् । मान्त्रिकस्य विषये सर्वेषाम् अनादरः भवतु इत्यपेक्षया अपि मम गौरवं बहु प्रधानम् । 'धनिकस्य धनं दातुम् अशक्तः कनकराजः, धनं चोरेण अपहृतम् इति असत्यम् उक्तवान् । अतः कनकराजः अनृतं वदति' इति सर्वे चिन्तयन्ति चेत् तदा मम अपमाननं न भवति वा ? पूर्वं भवता एकम् उक्तम् 'मान्त्रिकस्य वञ्चकत्वं साधयति चेत् धनं मह्यं मा ददातु' इति । अतः एव अहं धनं न ददामि इत्युक्तवान् । भवान् यदि वचनम् अन्यथा करोति तर्हि स्वीकरोतु धनम्'' इति कनकराजः धनं दातुं प्रवृत्तः ।

तदा कमलनाथः ''मास्तु ! मास्तु ! भवतः बुद्धेः मम पारितोषिकम् इदम्'' इति उक्त्वा गतवान् ।





# मरणशासनम्

गङ्गानगरे रङ्गनाथनामकः एकः धनिकः आसीत्। वृद्धत्वकारणतः तस्य दृष्टिः मन्दा आसीत्। सः इदानीं बधिरः अपि। देहशक्तिः अपि कुण्ठिता जाता।

एकदा रङ्गनाथः ज्येष्ठपुत्रं महेशम् आहूय उक्तवान्- "पुत्र! भवान् मम नेत्रयोः चिकित्सां कारयतु। यावत् जीवामि तावत् अहं पराधीनः भवितुं न इच्छामि" इति।

महेशः पितुः इच्छां मधुरवचनैः तिरस्कुर्वन् उक्तवान्- "दृष्टिशक्तिः क्षीणा चेत् कः दोषः इदानीम्? भवदीयसेवार्थं तु अहम् अस्मि। भवतः स्नुषा, पौत्राः अपि सन्ति" इति।

रङ्गनाथः एतद्विषये पुत्रं महेशं पुनः पुनः प्रार्थितवान्। अन्ते पितुः पीडाम् असहमानः महेशः पितरं ग्रामीणस्य कस्यचित् वैद्यस्य समीपं नीतवान्। वैद्येन चिकित्सा आरब्धा।

रङ्गनाथस्य भाग्येन वैद्यस्य हस्तकौशलेन वा अल्पे एव काले तदीया दृष्टिः पूर्ववत् एव जाता। सः इदानीं सम्यक् द्रष्टुं शक्नोति स्म।

रङ्गनाथः पुत्रम् उक्तवान्- "पुत्र! भवान् श्रद्धया चिकित्सां कारितवान्। एतत्कारणतः एव अहम् इदानीं सम्यक् द्रष्टुं शक्नोमि।"

रङ्गनाथस्य द्वितीयस्नुषा एतत्सर्वं दृष्टवती। सा पतिम् उक्तवती– "पश्यतु, भवतः पिता सर्वदा ज्येष्ठपुत्रस्य प्रशंसां करोति। भवता अपि कथञ्चित् पितुः प्रशंसा प्राप्तव्या किल?"

रङ्गनाथस्य द्वितीयपुत्रः श्यामसुन्दरः पत्न्याः सूचनाम् अङ्गीकृतवान्।

अनन्तरदिने एव सः नगरं गत्वा एकं प्रसिद्धं वैद्यं गृहम् आनीतवान्।

वैद्यः रङ्गनाथस्य गृहे एव निवासं कृतवान्। विशेषश्रद्धया औषधोपचारं कृतवान्। एतेन अल्पे एव काले रङ्गनाथस्य बधिरता दूरं गता। इदानीं रङ्गनाथः सम्यक् श्रोतुं समर्थः। अतः

सः द्वितीयपुत्रस्य अपि प्रशंसां कृतवान्।

एवम् एव कानिचन दिनानि अतीतानि। एकदा रङ्गनाथः पुत्रद्वयम् अपि आहूय स्वकीयं मरणशासनं प्रदर्शितवान्। तत्र मरणानन्तरं तदीयसम्पत्तेः भूमेः च का व्यवस्था भवेत् इति लिखितम् आसीत्।

मरणशासनपत्रं पठित्वा उभौ अपि पुत्रौ मूर्च्छितौ इव। यतः तत्र "स्वकीया सम्पत्तिः ग्रामे स्थितायै धर्मशालायै समर्पणीया" इति लिखितम् आसीत्।

'पितुः समीपे विवादेन कोऽपि लाभः नास्ति' इति तौ सहोदरौ चिन्तितवन्तौ। अतः तौ ग्रामीणान् प्रमुखान् आहूय प्रार्थितवन्तौ- "भवन्तः सज्जनाः एव अत्र न्यायनिर्णयं कुर्वन्तु। पिता समग्रां सम्पत्तिं धर्मशालायै किमर्थं समर्पितवान्? किमर्थं वा पुत्रौ आवां वञ्चितवान् इति न ज्ञायते। भवन्तः एव पितरं न्यायम् उपदिश्य आवाम् उद्धरन्तु" इति।

ते ग्रामप्रमुखाः रङ्गनाथ-समीपं गतवन्तः। तेषु एकः रङ्गनाथम् उक्तवान्- "रङ्गनाथ! भवतः एषः निर्णयः न उचितः। पञ्चेन्द्रियेषु समर्थेषु सत्सु यदि कश्चित् मरणं प्राप्नोति, तर्हि तदीयं भाग्यं तत्। भवतः पुत्रौ तु पितृभक्तौ। एकः नेत्रयोः विषये चिकित्सां कारितवान्। अपरः च श्रवणशक्तिविषये। एवं स्थिते पुत्रयोः कृते किमपि अदत्त्वा सर्वस्वस्य अपि दानं करोति इत्यस्य कः अर्थः?



किमेतत् उचितं वा ? भवान् एव चिन्तयतु" इति।

रङ्गनाथः हसन् उक्तवान्– "चिकित्सया पुत्रौ उपकृतवन्तौ इति तु सत्यम् एव। एतेन एव अहम् इदानीं गृहे यः कोलाहलः प्रचलति तं श्रोतुं शक्नोमि, सर्वं द्रष्टुम् अपि शक्नोमि। एतेन मम निश्चयः दृढः जातः यत् पुत्रयोः दानापेक्षया धार्मिक-सामाजिक-कार्यार्थं सम्पत्तेः दानम् एव श्रेयस्करम् इति।"

रङ्गनाथस्य एतानि वचनानि श्रुत्वा ग्रामप्रमुखाः चिन्तितवन्तः– "एषः वृद्धः पुत्रयोः विषये किञ्चित् असन्तुष्टः अस्ति" इति। अतः ते महेशं श्यामसुन्दरं च पृष्टवन्तः- "भवन्तौ पितुः वचनानि श्रुतवन्तौ किल ?" इति।

महेशः श्यामसुन्दरः च किमपि उत्तरं न उक्तवन्तौ। तौ लज्जया शिरः अवनमय्य स्थितवन्तौ।

तदा रङ्गनाथः पुत्रौ उद्दिश्य उक्तवान्– "खेदः मास्तु। सम्पत्तेः आशया पुत्राः स्वमातापित्रोः सेवां कुर्वन्ति इति तु सर्वैः ज्ञातः एव विषयः। सम्पत्तेः आशाया या सेवा क्रियते तत्र वास्तविकी प्रीतिः न दृश्यते एव। एतां नीतिं पाठयितुम् एव अहम् एतादृशं मरणशासनं लिखितवान्।

एतत् श्रुत्वा पुत्रौ सर्वे ग्रामप्रमुखाः च आश्चर्यचकितया दृष्ट्या रङ्गनाथं दृष्टवन्तः।

रङ्गनाथः पुत्रौ प्रीतियुक्तया दृष्ट्या पश्यन् पुनः उक्तवान्- "मम कथनतः पूर्वम् एव यदि चिकित्सायाः व्यवस्था कृता स्यात् तर्हि अहं बहु सन्तुष्टः अभविष्यम्। किन्तु एवं न कृतम्। मरणशासनतः युक्तः पाठः पठितः किल ? अतः इदानीं तत् परिवर्तयामि। वस्तुतः मदीयाः पुत्रपौत्रादयः एव सम्पत्तिम् अनुभवन्ति चेत् या तृप्तिः, सा अन्यया रीत्या न उपलभ्यते एव" इति।

रङ्गनाथस्य वचनानि श्रुत्वा सर्वे ग्रामप्रमुखाः स्वकीयां तृप्तिं सूचितवन्तः।






# विष्णुकथा

महामुनिः शौनकः दशावतारेषु अन्यतमस्य बुद्धावतारस्य विषये वक्तुम् आरब्धवान्-

कलियुगे धर्मः क्षीणतां गतः । अधर्मः निर्बाधतया विराजते स्म । मानवतां दुष्टगुणैः पराजिता । क्रूरतायाः साम्राज्यं सर्वत्र अपि ।

मानवेन इदानीं विवेकिना भवितव्यम् आसीत् । आत्मनः उद्धारार्थम् आत्मना एव प्रयतितव्यम् आपतितम् ।

पूर्वयुगेषु विष्णुः यदा यदा दुष्टानां प्राबल्यं प्रवृद्धं तदा सर्वदा किमपि रूपं धृत्वा अवतरति स्म । इदानीं पुनः अवतारार्थं समयः आसीत् ।

इदानीं समग्रा मानवजातिः परस्परद्वेषेण असूयया च ग्रस्ता । परस्परनाशे एव मानवानां रुचिः । यज्ञयागादीनां नाम्ना प्राणिहिंसा निर्बाधं प्रचलति स्म । मदिरामांसादीनां सेवनां कुर्वन्तः जनाः भोगविलासेषु लीनाः आसन् । एवम् अज्ञानेषु पतिताः ते स्वकीयां योग्यतांम् अपि विस्मृतवन्तः । सर्वत्र मूर्खता विराजते । दुःखदारिद्र्यादयः विजृम्भन्ते !

एतत्सर्वं दृष्ट्वा खिन्नः विष्णुः चिन्तितवान्- "अवतारार्थम् एषः युक्तः समयः । परिपूर्ण-मानवरूपेण अहं बुद्धनाम्ना भूलोकम् अवतरामि । अज्ञानान्धकारेण कष्टम् अनुभवतां मानवानां उद्धारं करिष्यामि" इति ।

नेपालराज्ये कपिलवस्तुनगरे राजा शुद्धोदनः शासनं करोति स्म । तस्य पत्नी मायादेवी । सा एकदा स्वप्ने दृष्टवती यत् पूर्णिमाचन्द्रः इव प्रकाशमानः एकः श्वेतगजः अकाशतः

"बुद्धावतार"



अवतीर्य तस्याः उदरं प्रविष्टवान् इति ।

राज्ञी स्वप्नवृत्तान्तं ज्योतिषिकान् निवेदितवती । ज्योतिषिकाः उक्तवन्तः- "एतेन स्वप्नेन ज्ञायते यत् महाराज्ञ्याः गर्भतः एकः महापुरुषः जनिष्यते" इति ।

नवमासेषु पूर्णेषु मायादेवी शिबिकाम् आरुह्य मातृगृहं प्रस्थिता । मार्गे एव सा प्रसववेदनाम् अनुभूतवती । एकस्मिन् उद्याने शिशोः जन्म दत्तवती । तद्दिनं वैशाखपूर्णिमा आसीत् ।

समग्रे राज्ये प्रसन्नता व्याप्ता । किन्तु एषा प्रसन्नता दीर्घकालं यावत् न स्थिता । यतः पुत्रजन्मानन्तरं अल्पे एव काले मायादेवी तीव्रतरम् अस्वस्था जाता । तन्निमित्ततः सा शुद्धोदनं प्रजाः च दुःखसागरे निमज्ज्य इहलोकव्यापारं समापितवती ।

मातृविहीनं पुत्रं नेत्रताराम् इव परिपाल्यन् शुद्धोदनः पुत्रस्य नामकरणोत्सवम् आचरितवान्। बालकस्य नाम गौतमसिद्धार्थः इति निश्चितम् । सिद्धार्थः प्रतिपच्चन्द्रः इव सर्वान् आह्लादयन् दिने दिने वर्धते स्म ।

एकदा ज्योतिषिकाः सिद्धार्थस्य जन्मकुण्डलीं परिशीलितवन्तः । ते उक्तवन्तः- "महाराज ! राजकुमारः चक्रवर्ती भविष्यति । सर्वे राजानः नागरिकाः च एतं सश्रद्धं मानयिष्यन्ति ।"

एतत् श्रुत्वा महाराजः शुद्धोदनः असीमम् आनन्दं प्राप्तवान् ।

"किन्तु, राजन्! राजकुमारः एषः सन्यासी अपि भविष्यति ।"

एतेन शुद्धोदनः पाताले पतितः इव भीतः । तस्य मनसि इदानीं प्रपञ्चः एव शून्यः इव भासते । सः ज्योतिषिकान् पृष्टवान्- "भवन्तः एकदा वदन्ति राजकुमारः चक्रवर्ती भविष्यति इति । पुनः कदाचित् वदन्ति सन्यासी भविष्यति इति। परस्परं विरुद्धम् एतत् कथं युज्यते ?" इति ।

ज्योतिषिकाः राजकुमारस्य जन्मकुण्डलीं पुनरपि सुसूक्ष्मं परिशील्य उक्तवन्तः- "महाप्रभो ! राजकुमारस्य हृदयम् अत्यन्तं कोमलम् । राजकुमारः रोगिणः, वृद्धान्, मृत्युवशं गतान्, सन्यासिनः च कदापि न पश्येत् । एतेषां

चतुर्णां दर्शनेन राजकुमारस्य जीवने भयङ्करः उत्पातः सम्भविष्यति। यदा राजकुमारः एतानि पश्येत् तत्क्षणे एव सः परिवर्तितः भविष्यति। अतः एतद्विषये सर्वदा जागरूकता भवेत्" इति।

तद्दिनात् आरभ्य राजकुमारस्य पोषणार्थं विशेषव्यवस्था कृता। सर्वदा मनोरञ्जनकार्यक्रमाः यथा प्रचलेरन्, राजकुमारः कदापि चिन्तामग्नः यथा न भवेत् तथा व्यवस्था कृता। पुत्रस्य पोषणविषये जागरूकः सन् शुद्धोदनः सर्वं स्वयं परिशीलयति स्म।

एकदा सिद्धार्थः उद्याने आसने उपविष्टः आसीत्। तदा बाणेन ताडितः कश्चन हंसः पीडाम् अनुभवन् तस्य अङ्के पतितः। सिद्धार्थः हंसस्य शरीरे लग्नं बाणं जागरूकतया निष्कास्य पर्णरसेन व्रणं लेपयित्वा तस्य प्राणान् रक्षितवान्।

"एषः हंसः मदीयः। अहम् एव एतं स्वबाणेन मारितवान्" इति वदन् देवदत्तः सिद्धार्थस्य समीपम् आगतवान्। देवदत्तः राजकुले उत्पन्नः कश्चित्, सिद्धार्थस्य दूरबन्धुः समवयस्कः च।

"अहं हंसं रक्षितवान्। अतः हंसस्य उपरि मम एव अधिकारः" इति उक्तवान् सिद्धार्थः।

एतद्विषये सिद्धार्थदेवदत्तयोः मध्ये विवादः उत्पन्नः। निर्णयार्थम् उभौ अपि राजसभां



प्रविष्टवन्तौ। तत्र धर्मशास्त्रज्ञाः ऐकमत्येन उक्तवन्तः- "सिद्धार्थः हंसस्य प्राणान् रक्षितवान्। अतः हंसस्य उपरि तस्य एव अधिकारः।"

एतत्कारणतः सिद्धार्थः देवदत्ताय सर्वदा असूयते स्म। "कदाचित् सिद्धार्थस्य अपमाननं करणीयम्" इति सः चिन्तयति स्म।

शाक्यवंशीयाः सुक्षत्रियाः। मृगयाविहारः तेषां प्रियतरं कार्यम्। किन्तु शाक्यवंशीयः अपि राजकुमारः सिद्धार्थः मृगयाविहारं न इच्छति। सः सर्वदा तद्विषये तिरस्कारं प्रदर्शयति च। अस्त्रशस्त्रप्रयोगे निपुणतां प्राप्य सः अपारं यशः प्राप्तवान् आसीत्। तथापि प्राणिनां पीडनं मारणं वा तस्मै न



गम्भीरचिन्तनार्थम् अवकाशं न प्राप्नुयात्, तथा व्यवस्थां कृतवान् शुद्धोदनः।

यदा राजकुमारः नगरं सञ्चरितुम् इच्छन् बहिः गच्छति तदा रोगिणः, वृद्धाः, सन्यासिनः, शवाः च दृष्टिपथं यथा न आगच्छेयुः तथा व्यवस्थां करोति– तदीयः रथवाहकः चेन्नः। सः एतत्सर्वं व्यवस्थाप्य एव राजकुमारं नगरं नयति स्म।

सिद्धार्थः यदा युवकः जातः तदा सत्यप्रियता, तार्किकदृष्टिः इत्यादयः तस्मिन् उदिताः। स्वर्गात् अवतीर्णः कश्चित् देवकुमारः इव सः सुन्दरः आसीत्। किन्तु मनोरञ्जकेषु, भोगविलासादिषु वा तस्य मनः न प्रवर्तते स्म। सर्वदा सः गम्भीरः एव तिष्ठति स्म। न कोपतापाः, न वा हासविनोदाः।

राजकुमारस्य व्यवहारं दृष्ट्वा शुद्धोदनः चिन्तामग्नः। सः चिन्तितवान्- ''सिद्धार्थः इदानीं विवाहयोग्यः। विवाहः कृतः चेत् एषः सांसारिकविलासेषु अनुरक्तः भवेत्'' इति। एवं चिन्तयित्वा सः क्षत्रियकुलोत्पन्नाः सुन्दरीः सर्वाः राजकन्यकाः राजभवनम् आगन्तुम् आमन्त्रितवान्।

राजकुमारः एतासु कयाचित् आकृष्टः भवतु इति चिन्तयन् शुद्धोदनः अन्तःपुरस्य नृत्यशालायां राजकुमारीणां नृत्यं गानं च आयोजितवान्। युवराजस्य मनः आक्रष्टुम् इच्छन्त्यः ताः स्पर्धाभावेन नृत्यं कृतवत्यः, गानं गीतवत्यः च।

रोचते स्म।

सिद्धार्थः मृगयाविहारार्थं कदापि न गच्छति। मनोरञ्जककार्यक्रमेषु सोत्साहं भागं न गृह्णाति। यं कमपि प्राणिनं दुःखपीडितं दृष्ट्वा सः स्वयं दुःखम् अनुभवति। हिंसादर्शनम् अपि सः न सहते।

एतत्सर्वं दृष्ट्वा शुद्धोदनः चिन्तितवान्– ''सिद्धार्थस्य धमनिषु रक्तं न, अपि तु करुणारसः एव प्रवहति'' इति।

एवं चिन्तयित्वा सः 'सिद्धार्थः अन्यराजकुमाराः इव भवतु' इति अभिलषन् बहुविधप्रयत्नान् कृतवान्। सिद्धार्थस्य मनोरञ्जनार्थम् अन्यान्यव्यवस्थाः उपकल्पितवान्। यथा सिद्धार्थः एकाकी न भवेत्, यथा वा सः

सिद्धार्थस्य कटाक्षम् अभिलषन्त्यः ताः विविध-हावभावं प्रदर्शितवत्यः ।

नृत्यन्तीनां गायन्तीनां च राजकुमारीणां सत्कारार्थं मौक्तिक-रत्न-सुवर्णमयानि आभरणानि पात्रेषु स्थापितानि आसन् ।

सुन्दर्यः राजकुमार्यः स्वकार्यक्रमस्य समाप्तेः अनन्तरं अपाङ्गदृष्ट्या सिद्धार्थं पश्यन्त्यः पुरस्कारं प्राप्य गच्छन्ति स्म ।

अन्ते सिद्धार्थः आसनात् उत्थाय गन्तुं प्रवृत्तः । तदा स्तम्भस्य पृष्ठभागे स्थिता काचित् रमणी तेन दृष्टा । तस्याः मुखे सौन्दर्यातीतः कश्चन भावः स्फुरति स्म । प्रशान्तवदने अपूर्वा कान्तिः सौजन्यता च स्फुटं प्रतिफलति स्म । सा एकस्य माण्डलिकराजस्य पुत्री । तस्याः नाम यशोधरा ।

सिद्धार्थः तया आकृष्टः । सः मन्दं मन्दं तस्याः समीपं गतवान् । तस्यै दातुम् इदानीं तस्य समीपे किमपि न आसीत् । अतः सः स्वकण्ठहारं तस्याः कण्ठे समर्पितवान् ।

"यशोधरायां सिद्धार्थः अनुरक्तः" इत्येषा वार्ता शुद्धोदनेन ज्ञाता । एतेन सः बहु सन्तुष्टः ।

"सिद्धार्थः यशोधरां परिणेतुम् इच्छति" इति वार्ता दूतद्वारा शुद्धोदनः यशोधरायाः पितुः समीपं प्रेषितवान् ।

एतत्समये देवदत्तः उक्तवान्- "यशोधरायाः विवाहार्थं स्वयंवरः व्यवस्थापनीयः । शौर्यस्य



पराक्रमस्य च परीक्षार्थं स्पर्धाः तत्र भवेयुः" इति । एतदनुसारं यशोधरायाः पिता स्वयंवरं निश्चित्य सर्वत्र वार्ता प्रेषितवान् ।

स्वयंवरे हिंसारहिताः विविधस्पर्धाः आयोजिताः आसन् । असङ्ख्याः युवकाः स्पर्धासु भागं गृहीतवन्तः । सर्वासु स्पर्धासु सिद्धार्थः एव विजयं प्राप्तवान् ।

सिद्धार्थस्य समबलः प्रतिस्पर्धी देवदत्तः एकः एव । अन्ते अश्वारोहणे बाणप्रयोगे च स्वकीयम् अप्रतिमं कौशलं प्रदर्श्य सिद्धार्थः विजयं प्राप्तवान् ।

एतदनन्तरं यशोधरा-सिद्धार्थयोः विवाहः महता वैभवेन सम्पन्नः ।

महाराजेन शुद्धोदनेन इदानीं मानसिकी



कुत्रापि न गतवान्।

केषाञ्चित् मासानाम् अनन्तरं तयोः दम्पत्योः एकः पुत्रः जातः। तस्य नाम राहुलः इति निश्चितम्। मातापितृभ्यां पितामहेन च प्रीत्या लालितः सः दिने दिने वर्धते स्म।

एकस्मिन् दिने सिद्धार्थः नगरं द्रष्टुम् इच्छन् रथम् आरुह्य रथचालनार्थं सारथिं चेन्नम् आदिष्टवान्। चेन्नः इदानीं सङ्कटे पतितः। सः सिद्धार्थस्य सङ्कल्पदार्ढ्यतां सम्यक् जानाति। अतः सः युवराजस्य आदेशं निराकर्तुं न शक्तवान्।

रथः कपिलवस्तुनगरस्य राजमार्गे गच्छन् अस्ति। तदा कश्चित् वृद्धत्वकारणतः कम्पमानः दण्डस्य आधारेण गच्छन् मार्गे आगतः। तस्य परिस्थितिः दयनीया। कोऽपि तं सहानुभूतिदृष्ट्या न पश्यति। वृद्धः अकस्मात् मार्गे स्खलन् पतति चेत् कोऽपि साहाय्यं न करोति। सर्वे स्वस्वकार्यं चिन्तयन्तः गच्छन्तः सन्ति।

रथः किञ्चित् अग्रे गतः। तत्र एकः रोगी मार्गे दृष्टः। भयङ्कररोगेण पीडितः सः पतन् उत्तिष्ठन् गच्छति स्म।

एतदनन्तरं श्मशानाभिमुखं नीयमानः कश्चन शवः अपि दृष्टः।

किञ्चित्कालानन्तरं सांसारिकजीवनात् विरक्तः, मायातीतः, भिक्षाटनमग्नः कश्चन भिक्षुः दृष्टः।

एतावति काले सिद्धार्थे गूढतया विद्यमानः

शान्तिः प्राप्ता। "पुत्रः इदानीं गृहस्थजीवने पादार्पणं कृतवान्। इतःपरं सः कौटुम्बिकजीवनेन आकृष्टः, चक्रवर्ती एव भविष्यति, न तु सन्यासी" इति चिन्तयन् सः तृप्तिं प्राप्तवान्।

यशोधरा सिद्धार्थानुरूपा पत्नी। सा सुसूक्ष्मं पत्युः मनोभावं परिशीलयन्ती तदनुगुणं व्यवहरति स्म।

"पतिः मानवतां सर्वश्रेष्ठां मानयति" इति सा अल्पे एव काले ज्ञातवती। एषः गुणः तस्याः अपि इष्टतमः एव। एवं परस्परम् अनुगुणं तयोः दाम्पत्यजीवनं ससन्तोषं प्रचलति स्म।

विवाहानन्तरं सिद्धार्थः अन्तःपुरात् बहिः

विरक्तिभावः अकस्मात् जागरितः।

राजकुमारः आत्मना दृष्टानां दृश्यचतुष्टयानां विषये बहुविधप्रश्नान् कृतवान्। अनिवार्यतया सारथिः सर्वेषां युक्तम् उत्तरं दत्तवान्।

सिद्धार्थस्य मनसि इदानीं महान् विचार-कोलाहलः। सः सारथिम् आदिष्टवान् 'रथः राजभवनं प्रतिनयतु' इति। सारथिः रथं राजभवनं प्रापितवान्।

तद्दिने रात्रौ राजकुमारः निद्रां न प्राप्तवान्। बहिः विराजमानां कौमुदीं पश्यन् सः समयं यापितवान्।

यशोधरा गाढनिद्रायां निलीना। राहुलः मातरम् आलिङ्ग्य सुप्तः। मातापुत्रयोः मुखे मुग्धता प्रतीयते।

विरक्तिभावनया प्रेरितः सिद्धार्थः राजभवनं त्यक्तुं चिन्तितवान्। किन्तु एकत्र पत्नी-पुत्राणां विषये व्यामोहः! अपरत्र वैराग्यम्!! मनः दृढीकृत्य सिद्धार्थः कानिचन पदानि अग्रे गतवान्। पुनः प्रत्यागतवान्। एवम् एव द्वित्रवारं प्रवृत्तम्।

अन्ते विरक्तिभावः एव प्रबलः जातः। सिद्धार्थः यशोधरायाः पादयोः उपरि एकं कुमुदपुष्पं स्थापितवान्। चरणस्पर्शपूर्वकं नमस्कृत्य राजभवनतः निर्गतवान्।

अन्तःपुरतः निर्गतः सः अश्वशालां गतवान्। 'प्रयाणार्थम् अश्वं सज्जीकरोतु' इति चेन्नम् आदिष्टवान्।

चेन्नः चिन्तितवान्-"राजकुमारः कौमुदी-विहारं कर्तुम् इच्छति" इति।

राजकुमारः अश्वम् आरुह्य उपविष्टवान्। चेन्नः अश्वस्य खलीनं गृहीत्वा अग्रे गन्तुं प्रवृत्तः। किञ्चित्कालपूर्वं लघुवृष्टिः आगता आसीत् इति कृत्वा भूमिः आर्द्रा आसीत्। अतः अश्वस्य खुरपुटध्वनिः अपि केनापि न श्रुतः।

अश्वः इदानीं राजमार्गे गच्छन् अस्ति। अश्वस्य उपरि उपविष्टस्य सिद्धार्थस्य मनः स्थिरम्। मायाजालात् विमुक्तः सः निश्चिन्तः।





# हस्तसामुद्रिकम्

राजपुरे कृष्णशास्त्री इति एकः हस्तसामुद्रिकज्ञः आसीत्। तस्य नाम न केवलं स्वपुरे प्रसिद्धम्, अपि तु चतुर्सृषु दिक्षु अपि प्रसिद्धम् आसीत्। तथापि सः दारिद्र्यकारणतः महता कष्टेन एव कुटुम्बपोषणं करोति स्म। अत्र मुख्यं कारणम् आसीत्– सः महापण्डितः सन् अपि धनं गौणम् भावयति स्म। धनिकान् अपि अनुरूपं प्रतिफलं न पृच्छति स्म। स्वेच्छया तैः यत् दत्तं तेन एव सः तृप्तः भवति स्म।

कृष्णशास्त्रिणः पत्न्यैः राजलक्ष्म्यै एतत् न रोचते स्म। सा तदा तदा पतिं वदति– "भविष्यत्फलं ज्ञातुम् इच्छन्तः ये धनिकाः गृहम् आगच्छन्ति तेभ्यः यथेष्टं धनं प्रतिफलरूपेण प्राप्नोतु" इति।

तदा कृष्णशास्त्री वदति स्म– "हस्तसामुद्रिकम् एतत् महत्वपूर्णा विद्या। कोटयधीशाः अपि मम गृहम् आगत्य हस्तरेखाफलं ज्ञास्यन्ति। श्रद्धां भक्तिं च प्रदर्शयन्ति। यदि अहं 'प्रतिफलरूपेण एतावत् धनं दातव्यम्' इति वदामि तर्हि तत् वाणिज्यं भविष्यति। तदा जनाः पण्डितम् अपि मां वणिक्सदृशं मन्यन्ते। अहं मदीयं ज्ञानं वितरितुम् इच्छामि, न तु विक्रेतुम्। ते सन्तोषेण यत् यच्छन्ति तदेव पर्याप्तम् अस्माकम्" इति।

तदा पत्नी असहनया वदति स्म- "एवं चेत् अस्माकं दारिद्र्यं अस्मिन् जन्मनि दूरं न गमिष्यति" इति।

'कृष्णशास्त्री श्रेष्ठः हस्तसामुद्रिकज्ञः' इति वार्ता तद्देशीयेन महाराजेन अपि श्रुता। तस्य आस्थाने शास्त्रपारङ्गताः कलानिपुणाः पण्डिताः बहवः आसन्। किन्तु हस्तसामुद्रिके समर्थः कोऽपि न आसीत्।

"कृष्णशास्त्री आस्थानपण्डितरूपेण नियोजनीयः" इति महाराजः चिन्तितवान्। किन्तु

"सुभद्रा"



चण्डी जाता ।

'महाराजस्य प्रार्थनाम् अङ्गीकरोतु' इति वक्तुं राजलक्ष्मीः यावत् चिन्तितवती तावति एव काले कृष्णशास्त्री भटान् उक्तवान्- "अहम् अद्यावधि अन्यस्य गृहं गत्वा हस्तसामुद्रिकं न उक्तवान् । महान्तः अपि मदीयं गृहम् एव आगत्य हस्तरेखाफलं पृच्छन्ति। धनिकः दरिद्रः सर्वेऽपि मम दृष्ट्या समानाः। राजानम् एवम् एव निवेदयन्तु भवन्तः" इति।

"कृष्णशास्त्री राजाज्ञां तिरस्कृतवान्। एतस्य अपराधस्य उचितः दण्डः भविष्यति एव" इति राजलक्ष्मीः ग्रामीणाः च चिन्तितवन्तः ।

कृष्णशास्त्रिणः उत्तरं श्रुत्वा राजा एकक्षणं स्तब्धः। 'एकस्य हस्तसामुद्रिकस्य एतावान् स्वाभिमानः वा?' इति सः उद्गारं प्रकटितवान्। 'शीघ्रम् एव एतादृशः जनः द्रष्टव्यः' इति तस्य मनसि इच्छा अपि जाता। एतद्विषये सः मन्त्रिणः अभिप्रायं पृष्टवान्।

एकसप्ताहानन्तरं राजा स्वयं राजपुरग्रामम् आगतवान्। एतेन ग्रामीणाः सर्वे चकिताः। अकस्मात् आगतं महाराजं दृष्ट्वा चकिता भीता च राजलक्ष्मीः किङ्कर्तव्यतामूढा सञ्जाता। कथं स्वागतं वक्तव्यम्? कथम् सत्कारः करणीयः? इति सा न ज्ञातवती।

किन्तु कृष्णशास्त्री अविचलः। सः

निर्णयस्वीकरणतः पूर्वं सः कृष्णशास्त्रिणः पाण्डित्यं परीक्षितुम् इच्छति स्म। अतः सः मन्त्रिणं स्वकीयम् विचारम् उक्त्वा कृष्णशास्त्रिणम् आनेतुम् आज्ञापितवान् ।

मन्त्री तद्दिने एव भटान् प्रेषितवान्। ते भटाः कृष्णशास्त्रिणः गृहं गत्वा 'राजास्थानम् आगच्छतु' इति प्रार्थितवन्तः। भटानाम् आगमनं ज्ञात्वा ग्रामजनाः चिन्तितवन्तः- "कृष्णशास्त्रिणः अदृष्टं फलितम्" इति। 'इतःपरं दारिद्र्यस्य कथा एव नास्ति' इति चिन्तितवती राजलक्ष्मीः।

किन्तु कृष्णशास्त्री भटानां प्रार्थनां श्रुत्वा किमपि चिन्तयन् उपविष्टवान्। एतेन ग्रामजनाः आश्चर्यचकिताः। राजलक्ष्मीः तु कोपेन

गौरवपूर्वकं स्वागतम् उक्त्वा यथायोग्यं सत्कारं कृतवान्। अनन्तरं आगमनकारणं पृष्टवान्। महाराजस्य इच्छानुसारं तदीयहस्तस्य परीक्षणम् आरब्धवान्। जागरूकतया हस्तरेखाः परिशीलयन् सः किञ्चिदिव सम्भ्रान्तः। यतः तदीयहस्तरेखाणाम् अनुसारं सः कदापि राजा भवितुं न अर्हति। परसेवाम् एव हस्तरेखाः सूचयन्ति स्म।

पुनरपि किञ्चित् कालं परीक्ष्य, अन्ते कृष्णशास्त्री उक्तवान्- "महाराज! क्षाम्यतु भवान्। अहं चिन्तयामि-मदीयं ज्ञानम् अपूर्णम् इति। भावदीयहस्तरेखाणां परिशीलनेन ज्ञायते यत् भवतः भाग्ये राजपदप्राप्तेः योगः एव नास्ति। किन्तु भवान् इदानीं महाराजः एव अस्ति। अतः अहं चिन्तयामि मदीयं ज्ञानं व्यर्थं जातम् इति। इदानीं मदीयः समग्रः आत्मविश्वासः नष्टः" इति।

एवम् उक्त्वा सः पार्श्वे स्थितान् सामुद्रिकग्रन्थान् सर्वान् कोणे क्षिप्तवान्। झटिति अग्निम् आनेतुम् पत्नीम् आदिष्टवान्। पत्युः विचित्रव्यवहारेण राजलक्ष्मीः चकिता। तदा कृष्णशास्त्री कोपेन 'शीघ्रम् अग्निम् आनयतु' इति पत्नीं पुनरपि आदिष्टवान्। तदा एतावत्पर्यन्तं द्वारि स्थितौ रक्षकभटौ समीपम् आगतवन्तौ।

तयोः एकः कृष्णशास्त्रिणं नमस्कृत्य उक्तवान्– "पण्डितोत्तम! भवान् सामुद्रिकशास्त्रे अद्वितीयः इत्यत्र सन्देहः एव नास्ति। भवान् इदानीं यस्य हस्तपरीक्षां कृतवान् सः वस्तुतः राजा न, अपि तु राजसेवकः। मया सह यः भटवेषेण स्थितः अस्ति एषः एव महाराजः। अहं तदीयः मन्त्री।"

एतत्सर्वं श्रुत्वा कृष्णशास्त्री, राजलक्ष्मीः ग्रामीणाः च आनन्दिताः। अनया रीत्या या परीक्षा कृता तद्विषये राजा क्षमां प्रार्थितवान्।

एतदनन्तरम् एकसप्ताहाभ्यन्तरे एव महाराजः कृष्णशास्त्रिणं अभूतपूर्वं सत्कृतवान्।





# चोरस्य सत्कारः

मौसुल्देशस्य महाराजः कदाचित् देशपर्यटनं कुर्वन् एकस्मिन् लघुनगरे स्वकीयं सेनाशिबिरं स्थापितवान्। उषःकाले राजशिबिरस्य पुरतः कश्चन कोलाहलः समुत्पन्नः। महाराजवसतितः पलायमनः एकः चोरः राजपरिवारीयेन केनचित् दृष्टः आसीत्। निमेषणमात्रेण सः चोरः अदृश्यः जातः अपि।

कोलाहलकारततः महाराजः जागरितः। वृत्तान्तं सर्वं श्रुत्वा सः अधिकारिणः आदिष्टवान्- "बहिः रक्षणव्यवस्था सुदृढा अस्ति। अतः चोरः बहिः धावितुं न शक्नोति। अन्तः एव कुत्रापि निलीनः अस्ति। झटिति तम् अन्विश्य मम पुरतः आनयन्तु" इति।

अधिकारिणः शिबिरस्य प्रतिकोणम् अपि अन्विष्टवन्तः। किन्तु तैः कुत्रापि चोरः न दृष्टः। तावति काले सूर्योदयः जातः। शिबिरे प्रवृत्तेन कोलाहलेन कुतूहलिनः बहवः नगरवासिनः तत्र सम्मिलिताः।

महाराजः इदानीं क्रोधतप्तः। तेन त्वरया राजधानी गन्तव्या अस्ति। तन्मध्ये एषा घटना! चोरः कुत्रापि न दृश्यते!

एतन्मध्ये अकस्मात् एकस्य प्रकोष्ठस्य कोणतः उच्चैः क्षुतध्वनिः श्रुतः। सेनाधिकारिणः त्वरया तां दिशं गतवन्तः। तत्र एकत्र कोणे शिबिरनिर्माणे उपयुज्यमानानाम् आच्छादकानां मध्ये चोरः दृष्टः।

अधिकारिणः तं ततः आकृष्य मारयितुं प्रयत्नं कृतवन्तः। तदा चोरः उक्तवान् — "भो भोः, तिष्ठन्तु तावत्। अहं महाराजम् एकान्ते किमपि निवेदयितुम् इच्छामि" इति।

एकः सेनाधिकारी महाराजसमीपं धावन् गत्वा उक्तवान्- "महाराज! चोरः बन्धितः अस्ति। सः एकान्ते भवन्तं किमपि निवेदयितुम् इच्छति।"

"अरेबियाकथा".

"चोरः मम समीपे वार्तालापं कर्तुम् इच्छति वा? अस्तु नाम, तम् अत्र आनयन्तु" इति राजा उक्तवान्। अधिकारिणः चोरं राजसमीपम् आनीतवन्तः।

चोरः महाराजं नमस्कृत्य उक्तवान्– "प्रभो! वस्तुतः भवता मम सम्माननं करणीयम्। भवदीयाः अधिकारिणः तु मां मारयितुम् उद्युक्ताः सन्ति" इति।

"भवतः सम्माननं करणीयम्?"

"राजन्! भवतः अधिकारिणः माम् अन्विष्यन्तः सर्वत्र गत्वा अपि असफलाः एव। भवान् राजधानीं गन्तुं सिद्धतां कुर्वन् अस्ति। शिबिरस्य पुरतः नगरवासिनः सर्वे जनाः सम्मिलिताः सन्ति। ते जनाः भवतः सेनाधिकारिणां बुद्धिमत्तायाः सामर्थ्यस्य च विषये किं चिन्तयन्तः स्युः?"....इति उक्त्वा चोरः किञ्चित् स्थितवान्।

'अग्रे वदतु' इति संज्ञां कृतवान् महाराजः।

"चोरः सेनाशिबिरतः बहिः न गतवान्। अन्तः एव कुत्रापि अस्ति इति सर्वे नागरिकाः जानन्ति एव। एतादृशम् अपि चोरं भवदीयाः अधिकारिणः ग्रहीतुम् असमर्थाः जाताः चेत् जनानां दृष्ट्या ते अप्रयोजकाः भविष्यन्ति। तेन महाराजस्य भवतः अपि अगौरवम्! अतः अहम् उच्चैः क्षुतशब्दं कृतवान्। मम जीवनस्य अपेक्षया महाराजस्य भवतः गौरवस्य रक्षणं मम दृष्ट्या प्रधानम्" इति उक्तवान् चोरः।

"भवतः वचनं सत्यम्" इति वदन् महाराजः सम्मतिं सूचितवान्। अनन्तरं नागरिकाणां पुरतः एव चोरस्य हस्तौ शृङ्खलया बन्धितवान्।

तद्दिने एव महाराजः तं नगरं त्यक्त्वा राजधानीं प्रस्थितः। मार्गे सः चिन्तितवान्– 'चोरः यथा चिन्तयति तथैव मदीयाः सैनिकाः अपि यदि चिन्तयेयुः तर्हि समीचीनम् अभविष्यत्' इति।

किञ्चिद्दूरगमनानन्तरं महाराजः चोरं बन्धमुक्तं कर्तुम् आज्ञापितवान्। किञ्चित् धनं दत्त्वा चोरम् अभिनन्दनपूर्वकं प्रेषितवान्।



## चित्रशीर्षिका-स्पर्धा  पारितोषिकं ५०/- रूप्यकाणि

विजितां शीर्षिकां फेब्रवरि-८'५ मासे प्रकटयिष्यामः।





❀उपरितनं चित्रद्वयं पश्यन्तु। तस्य युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा डिसेम्बर-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। स्पर्धायां विजेता ५०/ – रूप्यकात्मकं पारितोषिकं प्राप्स्यति। ❀ शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। ❀अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

चन्दमामा (संस्कृतम्)
७३/२ 'अक्षरम्', रङ्गरावमार्गः, शङ्करपुरम्, बेङ्गलूरु–'५६०००४

---

'अक्टोबर' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–

प्रथमचित्रम्– चिन्तां मा कुरु वानर! मित्र!

द्वितीयचित्रम्– बालः खलु अनुशासनयुक्तः।

प्रेषकः– च.लक्ष्मीनारायण शर्मा, जि.के.एस्.विद्यापीठम्, पुराणाट्टकरा, केरलम्-'५१

---

### भवन्तः जानन्ति वा? (उत्तराणि)

१. हेन्री ड्यूरण्ट्। २. सोवियद्देशस्य अलेक्सी. ए. लियोनोव्। ३. नार्वेदेशस्य रोनाल्ड् अमुण्ड्सन्।(४ डिसेम्बर् १९२२) ४. नार्वेनिवासी टिम्बीली। ५. स्वामी विवेकानन्दः।

Printed by B. V. REDDI at Prasad Process Private Ltd., and Published by B. VISWANATHA REDDI for CHANDAMAMA CHILDREN'S TRUST FUND (Prop. of Chandamama Publications) 188, . Arcot Road, Madras-600 026 (India). Controlling Editor: NAGI REDDI.

# कठिनशब्दाना सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अश्रूणि | Tears. | तल्पः | Bed. |
| आच्छादकम् | Blanket. | धमनी | Vein. |
| आत्मश्लाघनम् | Self-admiration. | पाञ्चालिका | Doll. |
| आदिष्टवान् | Ordered. | प्रकोष्ठः | Room. |
| उत्पातः | Calamity. | प्रतिफलम् | Reward. |
| उदरम्भरिः | Gluttonous. | प्रतीयते | Appears. |
| उपत्यका | Valley. | प्रत्यानयामि | Bring back. |
| उपधानम् | Pillow. | प्राकारः | Compound. |
| औद्धत्यम् | Arrogance. | बधिरः | Deaf man. |
| कण्डोलः | Basket. | बुद्धिमत्ता | Talent. |
| कनिष्ठिका | Little finger. | मरणशासनम् | Will and Testament. |
| कपालः | Skull. | मर्म | Secret. |
| कुमुदम् | Water Lily. | मन्त्राङ्गुलीयकम् | Magic Ring. |
| कुहरः | Cavity. | यापयितुम् | To spend time. |
| कौमुदी | Moonlight. | वमन् | Vomiting. |
| क्षुतम् | Sneeze. | वाक्स्तम्भनम् | Speechless. |
| खद्योतः | Glow worm. | वाणिज्यमम् | Business. |
| खलीनः | Rein. | वितरितुम् | To distribute. |
| खुरः | Hoof. | व्यामोहः | Infatuation. |
| चिरात् | After a long time. | शकलः | Piece. |
| जतुका | Bat. | सद्योनिर्मितम् | Newly built. |
| जनसम्मर्दः | Crowd. | स्वादुता | Taste. |

एवं पिता कश्चित् स्वपुत्र्यै लिखितवान्, यस्याःमाता सर्वदा कारागारे तिष्ठति । पत्रलेखकः पिता श्री जवाहरलाल नेहरू । पुत्री च इन्दिरा, या १९१६ तमे संवत्सरे जन्म लब्धवती, या च 'भारतस्य प्रधानमन्त्रिणी श्रीमती इन्दिरागान्धी' इति प्रसिद्धिं प्राप्तवती, या च विंशतितमशतके जातेषु श्रेष्ठनायकेषु अन्यतमा च ।

यद्यपि एषा प्रसिद्धस्य मोतीलालनेहरुमहोदयस्य पौत्री, तत्काले एव नायकत्वगुणैः समेतस्य जवाहरस्य पुत्री, तथापि एषा सुखेन वर्धिता इति तु न । यतः तानि दिनानि दारुणानि आसन् । पितुः एकमात्रं लक्ष्यम् आसीत्-भारतस्य स्वातन्त्र्यम् । अबला माता पितुरनुयायिनी आसीत् । स्वाभाविकतया एषा वैभवोपभोगेन च्युता । दम्पत्योः अद्वितीया । पुत्री, किन्तु कष्टानुभोगः उद्वेगः च ।

तस्याः माता कमलानेहरु १९३६ तमे वत्सरे दिवं गता । अनन्तरम् एषा एव पितुः कृते माता इव जाता । पितुः मरणपर्यन्तम् (१९६४) अपि तस्याः एषः व्यवहारः अविकलः आसीत् । एतेषु एव दिनेषु स्वकीयपरिवारस्य अपि दायित्वम् एतस्याः उपरि आसीत्, यस्य च सदस्याः पतिः फिरोजगान्धी, पुत्रौ सञ्जीवः राजीवः च । नूनं सा जवाहरस्य सहकारित्वेन दृढं स्थितवती-तं शुश्रूषमाणा, सूक्तं मार्गम् उपदिशन्ती च । एतेन एव जवाहरः भारतस्य प्रगत्यर्थं, एशियाखण्डस्य प्रपञ्चस्य च हितार्थं विशेषकार्यं कर्तुं समर्थः जातः ।













Photographs: Courtesy 'Hindustan Times'

पितुः सहकारिणी एषा कार्यानुभवम् अन्तर्दृ-षिटं च प्राप्तवती । धैर्यं, मातृभूमिविषये प्रीतिश्च एतस्याः साहजिकम् आसीत् एव । पत्युः पुत्रस्य च मरणसन्दर्भे सा यत् मनःस्थैर्यं प्रदर्शितवती तत् प्रशंसनीयम् । एतादृशम् एव मनःस्थैर्यं पुनरपि द्रष्टुं शक्नुमः, यदा सा राजकीयां राष्ट्रियां च आपदं सम्मुखीकृतवती ।

इन्दिरागान्धी अक्टोबर ३१ दिनाङ्के अमरत्वं प्राप्तवती । सा सर्वेषु स्निह्यति स्म, विशिष्य बालकेषु, स्वाभाविकतया चन्दमामाविषये अपि ।

सा लिखितवती— "अस्माकं बालकानां कृते तादृशानि पुस्तकानि पत्रिकाः च अपेक्षिता-नि, यानि प्राकृतिकानाम् अद्भुतानां विषये, सजीवविचाराणां प्रपञ्चविषये च जागरयन्ति । बालसाहित्यं चिन्तनशक्तेः उद्बोधकं स्यात्, कल्पनाशक्तिं जागरयेत्, ज्ञानपिपासां प्रोत्साहयेत्, तेनैव सह पारिवारिकं सामाजिकंच सौहार्दं शिक्षयेत् । चन्दमामायाः उत्तरोत्तरम् अभिवृद्धिः भवतु इति आशासे" इति ।

पुनश्च यदा 'चन्दमामा संस्कृतभाषया प्रकाशिता भविष्यति' इति तया ज्ञातं तदा सा लिखितवती— "संस्कृतभाषा अस्माकं संस्कृतेः शाश्वतिकं मूलस्रोतः । तथैव सा भाषा बहूनां भारतीयभाषाणां जननी च । अधिकसङ्ख्यया युवकाः एतस्याः भाषायाः अमूल्यसम्पत्तेः परिचयं प्राप्नुयुः । चन्दमामायाः संस्कृतावृत्तेः कृते शुभाशंसनानि" इति ।

तस्याः स्नेहः बुद्धिमत्ता च प्रेरणादायकत्वेन सर्वदा अस्माभिः सह स्थास्यति । वयं तां साभिमानं कृतज्ञतापूर्वकं च स्मरिष्यामः ।

(...पृष्ठे पश्यन्तु)